एवं समारूढयौवनस्समस्तज्ञेयपारावारीणः स्ववशपरम्परीणप्रथासर्वकर्मीणोऽभ्यमित्रीणः सोमप्रभोऽन्येद्यु पित्रानुज्ञातस्तं प्रणम्य सबलः, सर्वचर्मीणचार्मान्तर्निगूढनिष्कृपकृपाणः, सर्वाङ्गीणसुलक्षणमध्वनीनाशुश्रवसमारूढः शुभयावहनि पूर्वं पूर्वदिक्सम्मुखीनो दिग्विजयाय प्रतस्थे। तदश्वरत्नसाहाय्येन जित्वा च सर्वं दिशां विशाम्पतीन्, तभ्यो रत्नान्याहरन् विद्विषश्च शिरसा सममेव तद्दनुनिकृन्तन् कृतकार्यो हिमाद्रिनिकटे, पथि सन्निवेशितसैन्यो, वनाद्वनान्तरे शौवापदं मृगया कुर्वाणः किन्नरयुग्ममवलोक्य तज्जिघृक्षयैन्द्राश्वाधिरूढस्तद्-वधावत्। तच्च किञ्चिद् दूरं गत्वा गिरिगुहामेकां प्रविश्य चक्षुरगोचरतां गतम्। मनोजवेन च तेनाश्वेन तिदूरं नीतः सोमप्रभोऽनाश्वीनेऽध्वनि सुदूरपरित्यक्तबलः, सन्ध्यासमयेऽर्णवकैल्प महासरः एकं दृष्ट्वा तत्तीरे तां निशां निनीषुरवततार। अश्वस्य पुरो घासञ्च विकीर्य स्वयं गृहीतफलोदकोऽकस्मादेकतो गीतनिःस्वनमश्रृणोत्। कौतुकाकृष्टस्तमि स्वनानुसारेणच किञ्चिद् दूरं गत्वा शिवलिङ्गाग्रे गायन्तीं हैयङ्गवीनम्रदिमशरीरावयवाम् असाधारणीं दिव्यकन्यकामेकां ददर्श। सा च, केयमद्भुतसौन्दर्या सोदर्या रतेरिव स्यादिति, विस्मयस्तिमितलोचनमनिमेषेण चक्षुषाऽश्लिष्टयीकुर्वन्तमुदाराकृतिं कृतातिथ्यसत्कारा तमुवाच—'को भवान्' कथञ्च दुर्गमामिमां भूमिमेकाकी प्राप्तवान् ? एतच्छ्रुत्वोपवर्णितनिजवृत्तान्तेन, सोमप्रभेणात्मवृत्तान्तमनुवर्णयितुं निर्बन्धं चाद्रादरेण सा, पद्मतटरुहविटपिसमुत्पाटनपटुभिरश्रुपूरैराप्याययि तमुनेत्री निजोदन्तमेव वक्तुं प्रारभत। अस्ति हिमाद्रिकटके काञ्चनाभाख्यं पुरम्। आस्ते च तत्र पद्मकूटाभिधानो विद्याधरेश्वरः, तस्य हेमप्रभाख्यायां पत्न्यां जाता पुत्रादप्यधिकप्रिया मनोरथप्रभाऽहं कन्या। विद्याप्रभावेणाहं सखीभिः समं

---

१ 'अवारपारात्यन्तानुकामं गामी'। २ 'परोवरपरम्पर०'। ३. 'तत्सर्वादे पथ्यङ्गकर्म०'। ४. 'अभ्यमित्राच्छ च'। ५ 'सर्वचर्मणः कृतः खखञौ', तथा चर्मणोविकारेऽणि 'चर्मणः कोशे' इत्युपसंख्यानाट्टिलोपे चार्म (कोश)। ६. 'तत्सर्वादे ०'। ७ 'अध्वनो यत्खौ'। ८ 'यथामुखसम्मुखस्य दर्शन ख'। ९ 'शुनो दन्तदंष्ट्रा०', 'तस्येदम्', 'पदान्तस्यान्यतरस्याम्', इत्यैच्, ङीप्युवङ्भाव। १०. 'अश्वस्यैकाहगमः'। ११. 'अर्णसो लोपश्च'। १२ 'पृथ्वादिभ्य इमनिज्वा'। १३. 'आग्नीध्रसाधारणादञ्'। १४ 'अतिथेर्ञ्यः'। १५ 'एकादाकिनिच्चासहाये'। १६ सयोगोपधत्वात् 'स्वाङ्गाच्चोपसर्जनादिति' ङीषभाव।

प्रत्यहमाश्रमेषु, कुलशैलेषु, *निविरीसोपशैलप्रदेशेषु, पीलुकुणचर्णोपत्यक-वनोपवनेषु च क्रीडिवाऽऽहारसमये पित्रोरन्तिक भजन्ती शैशव व्यत्यया-ययम्। समुपारूढयौवना चैकदेतत्सरस्तटे विहरन्ती स्नानार्थमागतम्, सवयस्य, संस्यक्तमपर्यक्रमेक मुनिकुमारकम्। तद्रूपशोभया दूरया इवाकृष्टाह तमभ्युपग तेति समुपविष्टाया मयि तत्र साकूतया दृष्टया कृतमत्स्वागत परिज्ञातोभयाश यया मत्सरया कोऽय महाभाग इति तद्वयस्योऽप्रच्छि। तदाकर्ण्य सोऽब्रवीत्—यद्यातिदवीयसीतो निवमति स्वाश्रमे दीधितिमान्नामा मुनि । सत्कर्मठो वर्णी स सरसि स्नातुमत्र कदाचिद्यायातस्तत्कालागतया श्रिया दृष्ट । तच्च शरीरेणाप्राप्य, प्रशान्त, मनसैव सदनुकृत तर्मनुक्त साचीकमत साचीकृतचारुचक्षुपाऽवलोक-यन्ती सकामया भावनयेति तावद्दर्शनरसेनैव कृतकृत्यावासैतत्पुत्रा, स्वद्दर्शनान्मयि समुत्पन्नोऽय पुत्र, त्वया चैप परिगृह्यताम्' इत्युक्त्वा दीधितिमन्त त पुत्र समर्प्य श्रीरन्तर्दधे। मुनिरपिचानायासलब्ध त पुत्र हृष्ट सन् स्वीकुर्वन् यथाकालमुप-नीयाध्यापितसर्वविद्यीकृत । स एवाय रश्मिमान्नामा मया साकमिहायात श्रिय सुतो मुनिकुमारक । एवमुक्त्वा तद्वयस्येन पृष्टा मत्सखी मद्विषयकसर्वमपेक्षि तमन्वयनामादिक तस्मायवोचत् । अन्योन्यान्वयज्ञानसञ्जातानुरागावावा यावत्तत्र स्थितौ तावदेव द्वितीया सखी गृहादागत्याहारभूमौ मा प्रतीक्षमाण पितरमवोचत्, येनाहमाशु समागमिष्यामीति मुनिपुत्रमुक्त्वा भीत्या पितुरन्तिक मुपगम्य कृतकिञ्चिदशना रसनाऽन्नाद्देय तत्सम्पर्कसुखस्वादीयोरसमनुभवितु यावद्विनिर्गता तावदाद्या मदीया सखी समागता स्वैरमैरयत् सखि, मुनिपुत्रस्य तस्य सखा समागतो द्वारि स्थितो मामवदत् यन्मनोरथप्रभादर्शनेन कुसुमशरश-राऽऽशरशरव्यता गच्छन् मम सखा कामप्यनिर्वचनीयां दारुणा दशा प्राप्त प्रागे श्वरीं ता विना प्राणान् धारयितुमसमर्थ इति प्रयुक्तपैतृकप्योमगमनविद्योऽह मनोरथप्रभापार्श्वं प्रेषित इह समायात । एतदाकर्ण्य तदुदन्ततृप्रालुरतत्तो निर्ग-

---

* 'नेर्विडज्विरीसचौ' । १. 'तस्य पाकमूले पील्वादिभ्य कुणप्जाहचौ', 'तेन वित्तश्चुञ्चुप्चणपौ' । २ 'उपाधिभ्या त्यकन्नासन्नारूढयो', 'त्यकनश्च निषेध', 'तत्र भव' । ३ 'सस्येन परिजात' । ४ तिङ्श्चेत्यकच् । ५. 'कर्मणि घटोऽठच्' । ६ 'वर्णाद् ब्रह्मचारिणि' । ७ सद्, उत्तम अनूको वशो वृत्ति स्वभावो वा यस्य तम् । ८ 'अनुकाभिकाभीक कमिता' । ९ 'शीतोष्णतृप्रेभ्यस्तदसहने ।

स्याग्रे गामिना पर्यङ्केन तेन, दयालुहृदयालुमुनिपुत्रकमित्रेण, ससखीहाहमोहाय, मया विना चन्द्रोदयेन सहैवोद्गतप्राण तमद्राक्षम् । तद्वियोगार्णवनिमग्ना चाहमा त्मान निन्दन्ती गृहीततत्कलेवरा, मरणार्थिनी यावदेवानल प्राविविक्षं तावदेव तेज पुञ्जाकृतिरुरुवेली पुमानेको दिवोऽवतीर्य समुपात्ततच्छरीर खमुत्प यावलो-क्यमान एव चक्षुषामगोचरतां गत । त तथाभूयगते, भूते च तदनुपदिनि, तत्सुहृदि, केवलायामेव मय्यनल प्रविविक्षौ, गगनगवी मामेवमभाषत—'मनोरथ प्रभे, मनोरथ पूर्णस्ते भविष्यति मुनिकुमारकसङ्गमात्मक इति साहसेनानेना लम्' । एतदाकर्ण्य तत्समागमनिबद्धा शापाशासन्दानितप्राणा विरतमरणधारणा, धारणाध्यानादिना सद्दिनादादिनाथभगवन्त शकरमञ्चन्तीह स्थिता । एतद्वादिनी, तत्सखीविषये पृष्टा, सैवमवादीत्—यत्सा सिंहविक्रमनाम्नो विद्याधरेश्वरस्य मक रन्दिका नाम्नी कन्या मदीया सखी मद्दुःखदुःखिनी मद्वार्तां विज्ञातु स्वसखीं प्रेषितवती आसीत् । तया साक मयापि स्वसखी प्रेषिता इत्यद्याहमिहैकाकिनी तिष्ठामि । एवमुक्तवती सा, तदैव दिवोऽवतीर्णामुक्तसखीवार्तां तां स्वसखीं सोमप्रभाय दर्शयित्वा कारिततदर्थपर्णशय्याऽश्राय धासद्वादापयत् ।

तत कृतनैशिकविश्रामा व्यतियापितत्रियामाश्च सर्वे ते प्रातरुत्थिता व्योम्नोऽवतीर्णं देवजयनामान विद्याधरमपश्यन् । यथागत कृतानति-रुपविश्य मनोरथप्रभामेवमवादीत्—मनोरथप्रभे, राजा सिंहविक्रमो मन्मुखे-नैव त्वां वक्ति यत्त्वत्परिणीतायां त्वत्स्नेहात्तावकीना सखीव मदीया सुता मकरन्दिकाऽपि न विवाहमिच्छतीतीहागत्यैनां बोधय यतथ विवाहोन्मुखी स्यात् । एतदाकर्ण्य स्वसखीं प्रबोधयितु देवजयेन सह गन्तुकामया तया सह वैद्याधर लोकमवालुलोकयिषू राजा सोमप्रभोऽपि प्रदत्तधासमश्च तत्रैव स्या परित्वा सद्यो व्योम्ना सिंहविक्रमालय प्रापत् । तत्र प्रदर्शितवर्हुतिथातिथ्यो-तिथेयो[12] मकरन्दिका सोमप्रभ दृष्ट्वा कोऽयमिति जिज्ञासिता[13] मनोरथप्रभोक्ततदु-

१ 'तत्र कुशल पथ' (वुन्) । २ हृदयाचालुरन्यतरस्याम्' । ३ ओहा ङ्गतौ (आगत्येति भाव) । ४ 'अर्थाचासन्निहिते', 'तदन्ताच' 'ऋन्नेभ्यो ङीप्' । ५ 'वाहूरुपूर्वपदाद् बलात्' इतीनि । ६ 'भुवो भावे' । ७ 'अनुप यन्वेष्टा' । ८ सुखादिभ्यश्च' इतीनि । ९ 'निशाप्रदोषाभ्याच' । १० 'बहुगण पूगसङ्घात्तिथुक्'... 'तस्य पूरणे डट्' 'बहुपूगगणसङ्घस्य तिथुक्' । ११ अतिथेर्ञ्य । १२ पथ्यतिथिवसतिस्वपतेर्ढञ्, ढिड्ढाणञ्० इति ङीप् । १३ तदस्य सञ्जात तारकादिभ्य इतच्' ।

दन्ता समुद्यद्राकासोमप्रभेण सोमप्रभेण च सद्योऽपहृतमानसा न साऽऽत्मानं तत्परिवशं वशीकर्तुमपारयत्। सोमप्रभश्चापि सुपक्ष्मलाक्षीं[1] केशवां[2] लक्ष्मणां[3], ललाटूलाम्[4], सर्वथानुकूलाम्, लक्ष्मीतैषा[5] प्रियतमाङ्गना[6] तां मनसा प्राप्य, गण्य-गुण्यैं[7]प्रगण्य कश्चित्सुकृतिक[8]प्रकृतिक एव तद्वरो भवेदित्यचिन्तयत्।

अथ सायं सम्पादिताशनीतपिबतेषु सर्वेषु, सुखोपविष्टेषु, प्रवृत्ते च स्वैरं समालापे, वाग्मिनी[9], षोडशिनी[10], मनोरथप्रभा मकरन्दिका तदुद्वाहानिच्छाहेतुम-पृच्छत्। सा त्वाह शरीरादप्यधिकया मत्सख्या त्वयाऽस्वीकृते वरे कथमहं ते सुख-दुःखसम[11]धर्मिणी पाणिपीडनमिच्छेयम्। इत्थमुक्त्वा मनोरथप्रभा स्ववृत वरं, तत्सङ्गम-प्रतीक्षाऽऽचक्षाणा पाणिग्रहाभिलाषिण्या मकरन्दिकया सह सोमप्रभं पर्यचीचयत्। तामपि च तद्रूपयौवनलावण्यातिशयाकृष्टामालोक्य सिंहविक्रमं क्रमात्तप्रीतिमुप-क्रम्य मनोरथप्रभा तदुभयविवाहकृतनिश्चयाऽभूत्। ततोऽतितोषोत्कर्षोच्छ्‍ल-त्स्वान्तसिन्धुर्मनोरथप्रभाश्रमनिवर्तनावसरबिन्दु[12]ः सोमप्रभो लब्धरतिस्तां जगाद-अहमधुना क्षिप्रमेव त्वदाश्रमगमनोत्क[13]ः। मय्यधिष्ठितं तत्रागतं ममानुपदिं सैन्यं मद्वार्त[14]मनवेत्य मामकीनाऽहिताशङ्कि परावर्तेत चेत्सद्वत्सलयो[15] पुत्रवत्सलयो[16]र्मम पित्रो-र्महादुःखकर उदन्त एव स्यादित्यवगतसैन्यवृत्तान्तो नितान्तनिश्चिन्तस्वान्तः, परावृत्य मकरन्दिकां परिणेष्यामीति श्रुत्वा देवजयोत्सङ्गारोपितं तं यावदेव स्वाश्रममानयति मनोरथप्रभा, तावदेव सोमप्रभस्य प्रियङ्करनामा मन्त्री तत्पदवीं विचिन्वान ससैनिकस्तत्रागात्। मिलिताय च मन्त्रिणेऽतिहृष्टः सोमप्रभो यावदेव

---

१ पक्ष्मशब्दात् 'प्राणिस्थादातो लजन्यतरस्याम्' इति लचि सुपक्ष्मले अक्षिणी यस्यास्ताम्। २ प्रशस्ता केशा सन्ति यस्या इतिविग्रहे 'केशाद्वोऽन्यतरस्याम्'। ३ 'लक्ष्म्या अच्च' ( चात् न प्रत्यय )। ४. प्रशस्तललाटयुक्ताम् 'वातदन्तबल-ललाटानामूङ् च'। ५ 'कृञ्याानं'। ६ 'अज्ञातकल्याणे'। ७ 'अन्येभ्योऽपि दृश्यते' इति यप। ८ 'अत इनि ठनौ' (सुकृतं पुण्यं वर्तते अस्येति विग्रहः)। ९ 'वाचो ग्मिनि'। १० षोडश सम्वत्सरोऽस्या इति विग्रहे वयसि पूरणात् इतीनि ततो ङीप्। ११ '*समानस्य च्छन्दसीति*' सूत्रे *समानस्येति योगविभागात्सहशब्दवचनेन*, सहशब्देनास्वपदविग्रहबहुव्रीहिणा वा समानस्य सहशब्दस्य वा समासे 'धर्म शीलवर्णान्ताच्च' इतीनन्तात् ङाप्। १२ 'बिन्दुरिच्छुः'। १३ 'उत्क उन्मनाः'। १४. वृत्तश्च' ( विच्छिन्नस्य प्रतिविधानं वृत्ति, सा अस्त्यस्मिन्निति वार्तम् )। १५ 'वत्सांसाभ्यां कामबले'। १६. 'अन्येभ्योऽपि दृश्यते' ( वलच् )।

सर्वमादितं[1] शंसति तावदेव शीघ्रागमनसूचकपितृसन्देशगर्भलेखमादाय दूत समुपागत इति सचिवानुमत पितुराज्ञामनतिक्रामन् तच्छ्रौद्धो[2] निजनगर जिग-मिषुरवलोकितपितृकोऽह न चिरादिह समागमिष्यामीति मनोरथप्रभा देवजय चाप्युक्त्वा मातापितृदर्शनातितृष्णगुर्ण्यैको[3] निजनगरगमनाभिमना बभूव। देवजयोऽपि च निवृत्य प्राप्तमकरन्दिकान्तिक सर्वं तत्तां तथैवावोधयत् यच्छ्रा-कर्ण्य सा वासन्तिकोद्याने गीते, सखीजनकोमलालापे चापि पराङ्मुखी, आहारे चापि प्रदर्शितनिरादरा, परित्यक्तमण्डनादिका, पितृभ्या परिबोध्यमानाऽप्यविधृत-धृतिरुत्सृष्टबिसिनीपत्रशयनोन्मादिनीवोद्वेगदायिनी पित्रो निजप्रियतमवियोग-वैक्लव्यपिशुनविपु[4]णतामभजत् । पितृभ्यामनुनेनीयमानापि तद्वचसा प्रकृति-मनापन्ना सा क्रुद्धाभ्या ताभ्या निःश्रीके निषादमध्ये तेनैव शरीरेण कञ्चित्काल पततु शप्ता स्वजातिस्मृतिवर्जिता सा मकरन्दिका तदैव ( मुक्तालताख्या ) निषादकन्याऽजनि । तत्पिता सिंहविक्रमश्च कन्याशापशोकसन्तापितस्वान्त सपत्नीक पञ्चत्वमवाप । स च विद्याधरेन्द्र (सिंहविक्रम ) पुरा सर्वशास्त्रविन्मुनि केनापि प्रार्थना[5]पुण्यशेषेण शुकता गत इति स एवाय शुक स्वतपोबलाद्गुराधीत सर्वं सुतरां स्मरति । कर्मगतिश्चास्य विचित्रां स्मृत्वाऽहमहसम् । राजसदसि कथामेतामुक्त्वैष विमोक्ष्यते । सोमप्रभश्चास्य सुतां निषादीत्वमागतां मकरन्दिकां वैद्याधरे जनुषि प्राप्स्यत्येव । मनोरथप्रभा चापि सम्प्रति भूमिपरूपेण वर्तमान त रश्मिमन्त मुनिसुत तदैव पतिमवाप्स्यति । सोमप्रभश्चापि पितर दृष्ट्वाऽऽश्रमे प्रियाप्राप्त्यै शङ्कराराधनसाधिष्ठितष्ठति'—

एव मत्सम्बद्धा कथां कथयित्वा तूष्णीं[6]कामासीने मुनौ, समुपजातजाति-स्मरणभूयिष्ठहर्षशोकपरीतमानसोऽह येन मुनिना तत्र कृपया नीतोऽभवम् तेनैव मरीचिमुनिना गृहीत्वा वर्द्धित । समुपारूढपर्यङ्कश्च[7] पक्षिसुलभाचापला दितस्तत परिभ्राम्यन्, स्वविद्याश्चर्यञ्च प्रदर्शयन्, निषादहस्ते पतित क्रमात्व-दन्तिकमानीत । इदानीञ्च मदीय पक्षियोनिज दुष्कृत क्षीणम् ।

---

१ 'आद्यादिभ्य उपसंख्यानम्'। २ 'प्रज्ञा श्रद्धार्चाभ्यो ण'। ३ 'आनङ् ऋतो द्वन्द्वे'। ४. 'शीतोष्णाभ्यां कारिणि'। ५ 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धे' ( निपुणता अव्यवस्थितचित्तता )। ६ 'द्विक्शब्दस्य' इति विहितत्यारगाते 'अश्चेर्लुक्' 'तद्धितश्चासर्वविभक्तिरि'त्यव्ययत्वे, 'सायंचिरमि'ति ट्युट् तुट् । ७ 'मकच्प्रकरणे तूष्णीम काम् वक्तव्य'। ८. 'अस्ने'।

एता कथां कथयित्वा विरते विचित्रवाचि विदुषि शुके, स सुमनोमहीभृत् तदाकर्णनप्रमदपयोनिधितरङ्गोद्वेलितविस्मृतान्तरात्मा समजायत । सोमप्रभतपसा चातिसन्तुष्टः शङ्करः स्वप्ने तं सुमनोनृपस्यान्तिकं गन्तुं तत्र स्वकान्तां ज्ञातुमित्थं समादिदेश यत् पितृशापतो मकरन्दिका निषादसुता भूत्वा शुकतामवाप्त निजपितरमादाय राज्ञोऽन्तिकं प्राप्ता त्वाञ्चावलोक्य विनिवृत्तशापा सा विद्याधरी सती स्वजातिं स्मरिष्यती अन्योन्यविज्ञानविवृद्धहर्षशोभासम्पन्नयोर्युवयोः सङ्गमो भविष्यति' । भूमिपतिमेवं निगद्य गिरिशः स्वाश्रमस्था मनोरथप्रभामपि तथैवानवात्-यद्रश्मिमान्नामा यो मुनिसुतस्ते वरोऽभिमतः स सम्प्रति सुमनोऽभिधानो भूमाबुत्पन्न इति तत्र गत्वा त्वद्दर्शनेन सम्प्राप्तजातिस्मरं तं वरमाप्नुया ।

सोमप्रभविद्याधरकन्यके विभुना शम्भुना इत्थं स्वप्नं पार्श्वस्थेनादिष्ट सुमनोनृपते सद्य समाजग्मतु । तत्र सोमप्रभावलोकनेन सस्मृतस्वजातिर्विमुक्तशापा मुक्तालताख्या मकरन्दिकाऽवाप्तनिजदिव्यवपुस्तं कण्ठे जग्राह । सोमप्रभोऽपि च गिरिशापते प्रभावाद्विद्याधरराजपुत्रीमवाप्य कृतार्थं समपद्यत । सुमनोमहीपतिश्चाप्यवलोकितमनोरथप्रभस्मृतस्वजातिर्नभश्च्युतो पूर्वां तनु प्रविश्य मुनीन्द्रपुत्रतामवाप्य चिरोत्सुकं स्वकान्तया च तया सङ्गतं स्वाश्रमं प्रययौ । सोमप्रभभूपतिश्चापि निजां प्रियामादाय निजनगरमगमत् । शुकोऽपि च सद्यो वैहङ्गं इसङ्गभङ्ग कृत्वा तपोभिरर्जितं निजधाम जगाम ।

एवं सुदूरान्तरितविरह[1]सङ्कसकटसङ्क्रिताना[2]मपि देहिनां यथाकालं वश्य सङ्गमः सञ्जायते इति न कथमप्यत्र भवता शक्तियशोलाभविषये चिन्तितेन भुवेत्थिमम् एवं निजसचिवेन गोमुखेन प्रबोधितो नरवाहनदत्तः शक्तियशःसङ्गमसमुत्सुकोऽपि परमसन्तुष्टः शयनशरण[2]माशिश्रियत् ।

परेद्युरेव गोमुखसौखशायनिक-सौस्ना[3][4]तिक सेवकजनपरिवृतनरवाहनदत्तमनोविनोदसमये पुनरायातस्तन्मनोरञ्जनार्थं कथामपरामेवमारभत—

अस्ति यथासमयमुत्पमानपल्यू[5]यमानमौ[6]द्गान-व्रैहेयं[7] यव्यतैल्ये[8]गौधूमानचा

१ वे शालच्छङ्कटौ सम्प्रोदश्च कटच विशङ्कटसङ्कटमकटैरतिट् वै सकन्तानाम् अभिभूतानाम् । २ शयनागारम् । ३ ४ पृच्छतौ सुस्नातादिभ्य' । ५ पल्यूल्लवनपवनयोरिति चौरादिकधातोर्यकि शानच । ६ 'धान्यानां भवने क्षेत्रे खञ्' । ७ 'व्रीहिशाल्योर्ढक्' । ८ 'यवयवकषष्टिकाद्यत्' 'विभाषा तिलमाषोमाभङ्गाणुभ्य' । ९ 'सल्यसमापतिलयुषमन्यणञ्' ।

णकीनैः[1] क्वचिद्द्वितीया[2]क्रियमाणैरितरत्र शम्बा[3]क्रियमाणैरन्यत्र च बीजा[4]कृतैः क्षेत्रैरिक्षुशाकटोपयुज्यमानशाकि[5]नैः, आनुर्ग[6]जमार्गोपरूढाजन्य[7]विध्यैः, आशित[8]ङ्गवीनगोष्ठीनैः[9] विकटाविक[10]टोरणयुद्धैः, अविपटा[11]विपोढावपपय पिपासाऽविक[12]पोतकपेपीयमानावि[13]सोढैः, सञ्चाल्यमानगोगोयु[14]गोडशक[15]ट्युपरथोपवेशित-कृषीवलबालकृ[16]तीनैः, अनुग[17]वीनसरद्यमाणाश्व[18]श्वीन-समांसमीनैः, गोगोष्ठ[19]तिष्ठद्गा[20]वीनैः स्थलैः, सद्बृह[21]तिकैरप्यसद्बृहतिकैः परहितपरिहितकौ[22]पीनैरप्यतिशालीनैर्जनैश्च राज[23]न्वद्भारतभूमिमनुकुर्वत कुरवर्षस्य धारेश्वराभिधेये शैव सिद्धक्षेत्रे न्यवसरकोऽपि बहुभिर्वैनयिक[24]-ता[25]पसोपसेदिवद्भिरुपास्यमानो मुनिश्रेष्ठ[26]। एकदा स स्वप्रेष्ठा[27]न् शिष्यान् आहूय 'युष्मासु केनचिदपि किमप्यपूर्वं श्रुतं दृष्टं वा स्याच्चेदुपवर्ण्यताम्' इत्याज्ञापयत्। गुरुणा एवमुक्तानां तेषामेक[28]तमोऽगार्गीदानु-

---

१ धान्यानाम्०। २ ३ ४ 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ'। ५ 'भवने क्षेत्रे शाकटशाकिनौ', 'शकटादण्'। ६ 'अनुर्यत्समया', 'तद्गच्छति पथिदूतयोः'। ७. 'अचावित्र्या थ्यन्'। ८ 'आपङ्क्ताशितङ्गवलम्०'। ९ गवां स्थानमिति सुपीतियोगविभागात्तिष्ठते के, अम्बाम्बगोभूमीति सस्य षत्वे दुत्वम्, एव निष्कमाद् गोष्ठशब्दात् 'गोष्ठात्खञ् भूतपूर्वे'। १० 'सम्प्रोदश्च कटच्' इत्यत्र चाद्विकटम्, तथा अविशब्दात् 'सघाते कटच्' सत्र ये उरणा मेषा (कारनाम्नीतिसूत्रे हलादावेवेतिनियमेन सप्तम्यलुग भाव)। ११ 'विरनार पटच्'। १२ 'अवे क' (अविरेव अविक)। १३. 'अवेर्दुग्धे सोढदूसमरीसचोवक्तव्या' (सकारपाठ सामर्थ्यान्न प)। १४ 'द्वित्वे गोयुगच्'। १५ सर्वतोऽक्तिन्नर्थादित्यके'। १६ 'रज कृष्यासुति०' 'बले', 'व्रातेन जीवति'। १७ 'अनुग्वल गामी'। १८ 'अश्वश्वीनावटब्धे'। १९ 'गोष्ठजादय स्थानादिषु पशुनामभ्य'। २० आह् पूर्वाद्गो कर्मकरे ख, गो प्रत्यर्पणपर्यन्त कर्मकर। २१ बृहती भाषणम् जलादिनिधान वा तत्सहितै रपि प्रावाररहितै (एकत्र बृहतिकाशब्दे 'न सामिवचने' इति सूत्रज्ञापितो बृहतीशब्दात्स्वार्थिक कन् 'केऽण' इति ह्रस्व)। २२ 'शालीनकौपीने अधृष्टाकार्ययो'। २३. 'राजन्वान् सौराज्ये'। २४. 'विनयादिभ्यष्ठक्'। २५ 'अण् च' इत्यनेन तपसोऽण्। २६ अतिशयेन प्रशस्य इति, 'अतिशायने तमबिष्ठनौ' इत्यनेन प्रशस्यशब्दादिष्ठनि प्रशस्य श्र 'प्रकृत्यैकाच्'। २७ प्रियशब्दादिष्ठनि, प्रियस्थिरेति प्रादेश। २८ 'एकाच्च प्राचाम्'।

आनुगादिको[1]ऽपूर्वस्य स्वश्रुतस्यैव यत्काश्मीरेषु विजयनामधेये कस्मिंश्चिच्छाम्भवे महा चेत्रे कृतकुटीर, सर्वथा शत्रुरपि[2] विद्याहृयु[3] कश्चित्परिव्राण्[4] न्यवसत्। अह सर्व विजयी भवेय, दविष्ठेष्वपि[5] देशेषु मदीया बहिष्ठा[6] कीर्ति प्रसरेदित्यस्युत्कटेच्छ शम्भु प्रणम्य सद्योवादाय वहिर्निरगमत्। पर्यटनक्रमेण च स विदुष्मत[7] प्रदेशान् गत्वा तत्रत्यान् वादविद्वद्द्ध्यबहुपटून्[8] पराजयमानोऽटवीमेकामासाद्य परिश्रान्त स्तरोरेकस्याधस्तात्[10] विशश्राम। क्षणादेव च तत्र नेदीयसि[11] सर सरसिजशिशिर समीरणे चेत्रे कुतश्चित्समागतेन दण्डकुण्डिकाकरेण, द्रव्येण[12], धार्मिकेणैकेन[13] तस्य काकतालीया[14] सगति सञ्जाता। कुत आगत, क च त्व यासीति परिव्राजा परिपृष्टो धार्मिको जगाद, 'अह विद्याचेत्रात्पाटलिपुत्रादिहायातो वादेन वावदूकान् जेतु काश्मीरान् गच्छामि'। एतदाकर्ण्य परिव्राडचिन्तयत्–यदिहस्थोऽयमेक पाटलि-पुत्रीय स्वकुशाग्रीयया[15] बुद्ध्या न मया जितश्चेत्तत्र गत्वा बहूना जयोऽसम्भव एवेति परिव्राड् धार्मिकमाक्षिप्यैवमाह–'देव मुमुक्षुस्त्वम्, वादव्यसनातुरस्त्वञ्चेत्येतद् द्वय[16] सर्वथाऽन्योन्यभिन्नम्। वादाभिमानबन्धेन ससृतिमुमुक्षा, वह्निनौष्ण्यशमन मिव, हिमेन च शीतनिवारणमिव, पाषाणतरण्या सिन्धूत्तरणमिवेति रभसा कृते शोभावहा वाक्कलहविवादेच्छा[17] परित्यज्य ससारक्लेशभीरुणा मुमुक्षुणा सर्वथा शान्तेन दान्तेन च भवितव्यम्। एवमुक्तो धार्मिकोऽतिसन्तुष्ट उवाच–'सदन्धो हि सज्जनानामाभाषणपूर्व, सख्य[18]ञ्च साप्तपदीनमित्यदस्यामिह सङ्गतयोर्नावेतद्-द्वितय सञ्जातम्। अतो मित्रस्थानेऽपि भवानुपदेशेनानेन मे गुरुस्थानीय[20]।

---

१ अनुगादिनष्ठक्'। २ 'कशाभ्या बभयुस्तितुतयस'। ३ 'अह शुभमो र्युस्'। ४ 'परौ व्रजे ष पदान्ते'। ५ 'स्थूलदूर०'। ६. बहुल शब्दादिष्ठनि 'प्रियस्थिरे'ति वहादेश। ७ 'तदस्यास्त्यस्मिन्निति मतुप्', 'तसौ मत्वर्थे' 'वसो सम्प्रसारणम्'। ८. 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर'। ९ विभाषा सुपो बहु पुरस्तात्तु। १०. 'पूर्वाधराधराणाम्०' 'अस्ताति च'। ११ अन्तिकशब्दादीयसुनि 'अन्तिकबाढयोर्नेदसाधौ। १२. 'द्रव्य च भव्य'। १३. 'धर्म चरति'। १४. 'समासाच्च तद्विषयात्'। १५ 'कुशाग्राच्छ'। १६. 'सङ्ख्याया अवयवे तयप्', द्वित्रिभ्या तयस्यायज्वा'। १७. 'पूर्वसदृशसमो-नार्थकलह०'। १८ 'सख्युर्य'। १९ साप्तपदीनं सख्यम्'। २० 'स्थानान्ताद्वि-भाषा सस्थानेनेति चेत्'।

एवमुक्त्वा बहुकृत्वस्तं[1] प्रणम्य, त्रिः[2] परिक्रम्य च, यथाभिमतमगात्। परिव्राट् च तत्रैव स्थितो भार्यया सह क्रीडतस्तद्द्रुमसद्मो[3] यक्षस्य[4] वार्ताप्रसङ्गेऽशृणोत् यत्क्रीडायाम् यक्षेण नर्मणा पुष्पस्रक्ताडिता तद्वृक्षकपत्नी मृषैव विच[5]तीकृता मृतकल्पा[6] मात्मानं प्रदर्शितवतीति बान्धवैर्जनमुक्ताक्रन्देन कोलाहलपूर्णं तत्सर्वं स्थानं क्षणमजायत। चिरस्यैवंभूतदशा सा दृशावुदमीलयत्। 'किं ते जातम्? कथमेवमभूत्? किं वा त्वयैवंभूतदशायामन्वभावीति' पृच्छापरवशे यक्षे, मिथ्यैव सैवमवोचत् 'त्वया मालयाऽभ्याहताहं तत्क्षणमेव कृ[7]ष्णं, पाशहस्तं, क[8]र्णिलम्[9], दन्तुरम्[10] ज्वलन्नेत्रम्, ऊर्ध्वशिरोरुहं, निजच्छायामलीम[11]सीकृतसर्वदिशम्, कमप्यपश्यम्। स च दुष्टः शमनसदनं मामनैषीत् किन्तु तत्रत्यस्वा[12]मिना 'नैषोऽमुष्या मृत्युसमयः' इत्युक्त्वा परित्यक्ता जागरितेवाहं प्रकृतिमापन्ना इह चकितानिव, विरही[13]कृतानिव वोऽवलोकयामि। एवमभिधायिनीं यक्षिणीमाकर्ण्य यक्षो जर्वदा[14]चचक्षे मूढे—जानामि त्वामहं कुहनानायिकाममतिमायिकाम्[15]। स्त्रीणां हि चेष्टितं प्रायेणैन्द्र[16]जालिकमेव। क्व स्रक्ताडनया यमपुराध्वाध्वन्य[17]ता क्व च तत्र परावृत्तिः। त्वयेत्थमभिदधत्या पाटलिपुत्रस्त्रीवृत्तान्तोऽन्वकारि ययैवमेव विचित्रकृत्येन स्वपतिरवञ्चि। सा च तदानीन्तनपाटलिपुत्रीयसिंहासननामकस्य राज्ञो भार्या। एकदा सा स्वमन्त्रिसेनानीपुरोहितवधूभिः सह ज्यौत्स्न[18] पक्षत्रयोदश्यां सरस्वती[19]मन्दिरं दर्शनार्थं यान्ती मार्गे विविधं विचेष्टमानैः मृतं[20]मृता इति चीत्कुर्वाणैः श्व[21]र्शसैः, कुष्ठिभिः,[22] पीनसिभिः[23], आनाहिभिः[24], भगन्दरिभिश्चैव

१ विभाषा बहोर्धेति' पाक्षिकधाऽभावे 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'। २ 'द्वित्रिचतुर्भ्यः सुच्'। ३ 'द्युद्रुभ्यां मः'। ४ 'दाधेट्सिशदसदो रुः'। ५ 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च'। ६ 'ईषदसमाप्तौ कल्पप्'०। ७ 'प्रज्ञादिभ्यश्च'। ८ 'गुणवचनेभ्यो मतुपो लुगिष्टः'। ९ 'स्वाङ्गाद्विवृद्धौ' (इलच्) वृद्धकर्णमित्यर्थः। १० 'दन्त उन्नत उरच्'। ११ 'ज्योत्स्नातमिस्रा'०। १२ 'स्वामिन्नैश्वर्ये'। १३. 'अरुर्मनश्चक्षुश्चेत ०। १४ 'जल्पिर्याद्य पट्', 'नाऽस्य-इनार्चदुगु'। १५ 'व्रीह्यादिभ्यश्चेति' ठन्, टाप्। १६ 'प्रयोजनम्'। १७ 'अध्वनो यत्खौ'। १८ 'ज्योत्स्नादिभ्य उपसङ्ख्यानम्' इत्यण्। १९ सर प्रसरणम् तदस्त्यस्यामिति मतुपि 'सञ्ज्ञायाम्' इति मस्य व। २० 'आबाधे च'। २१ 'अर्श आदिभ्योऽच्'। २२-२४ 'द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः' (मूत्रावरोध, कोष्ठबद्धता वाऽऽनाहस्तद्युक्तैः)।

विविधदोनिय[1]व्याधिदु:खाकृतैरन्यैश्च कुब्जान्धपङ्गुखोडा[2]वटीटचिह्नै[3]कौकुटकै[4]र्मिलिता निगदिता देवि, देहि दीनेभ्यो विविधामया[5]विभ्यो नः किमपि भैषज्य[6]म्। कुर्वस्माकमर्शतं[7], कुष्ठतः, प्रवाहिकातश्चेति। यतो हि सौदामनी[8] स्फुरितभङ्गु-रोऽयं जीवलोकः। दानदेवदर्शनादिभिरेवाकालिको[9]भिधानीयै[10]कंप्रतीयमानरामणी-यक। तथापीमा इव तुन्दिभा[11], केशवा[12] अप्यकैशवा[13] बहवो ऽश्नीतपिवतमोदत्तै कपरायणाः औदरिकौ[14] उदरपूरं भुक्त्वा सुवसितवसनाः केशिका[15] स्वसदृशान् समया, समयाकु[16]र्वन्ति किन्तु ना त्वभवतीभिरप्यदसो[17]य्[18]वृत्तिभोग्यमपि स्वकिञ्चना[19] वयमीश्वरप्रदत्तशक्तिभिरुद्धर्तव्या।

एतदाकर्ण्य भूपादिपत्न्योऽन्योन्यपरामर्शेन निःसहायांस्तान् एकैक[20] चिकि-त्सयितु स्थिरीकृतवत्यः। देवीदर्शनानन्तरं परावर्तमानाश्च ता विविधव्याधि-ग्रस्तांस्तान् पृथक् पृथक् स्वभवनान्यानाय्य स्वस्वस्वामिसमवासम्मतयस्तेषां सेवां सम्पादयन्त्यो न तदन्तिकादुत्तस्थुरिति वंहीय कालिक[21]सम्पर्केण तथा तदा-सक्तास्ताः सञ्जाता यन्मन्मथान्धीकृतास्तन्मयमेव जगदवलुलोकिरे। स्वप्रे-यसीरेवभूता अवलोक्य समुपजातशङ्केषु नृपादिषु, नृपो युक्त्या स्वपत्नीमनु-युज्य वास्तविकतत्त्वमवगन्तुं प्रतिजज्ञे। परेद्यवि तस्याः शरीरे कानिचित् सम्भोगविशेषचिह्नानि समवलोक्य तज्जिज्ञासापरो राजा सत्याख्यानेनैव तस्या

---

१ 'दोन्रियच् परदेने चिकित्स्य'। २. 'नते नासिकाया सज्ञाया टीटन् नाटज्भ्रटच'। ३ 'क्लिन्नस्यचिल्पिल्लश्चास्य चक्षुषी'। ४. 'सज्ञाया ल्लटकुक्कुच्यौ पश्यति'। ५ 'आमयस्योपमत्यानम्'। ६ 'अनन्तावसथेतिहवेपजाञ्ज्य'। ७. 'रोगाच्चापनयने'। ८ 'तेनैकदिक्'। ९. 'आकालिकडाद्यन्तवचने'। १० 'योपधाद्गुरूपोत्तमाद्वुन्'। ११. 'तुन्दिवलिवटर्भ' (वृद्धानाभिस्तुन्दि)। १२.'केशाद्वोऽन्यतरस्याम्'। १३. 'भवि'। १४ 'उदाराट्ठगाद्यूने'। १५. 'स्वाङ्गेभ्य प्रसिते' (केशप्रसाधन प्रसक्ता', तद्रचनाया तत्परा इत्यर्थ.)। १६. 'समयाच-यापनायाम्'। १७. 'इतराभ्योऽपि दृश्यन्ते' (इति त्रल्) इतिप्रमाणाद् भवदादि योग एव। १८ त्यदादीनां वृद्धसे, 'वृद्धाच्छ'। १९. न वर्तते किञ्चनमेषा-मिति मयूरव्यंसकादित्वात् समासः। २०. एक बहुव्रीहिवत्। २१. 'प्रकृष्टे ठञ्' (प्रकृष्टो दीर्घ. कालोऽस्येति कालिकः सम्पर्कस्तेन)।

श्रेयो निर्दिशन् प्रतारणकौशलिकया[1] तयैव कृतकमुक्तं—'चारित्रेतो[2]ऽति-गृह्यमाणाऽहं न वृत्ततो व्यथेऽद्यावधि न कथमपि वृत्ततः क्षिता। आम्, रात्रौ वितश्चित्रभित्ते कश्चिच्चक्रगदाधरो निर्गत्य मामुपैति तत्कृतमेतच्चिह्नम्' एतदाकर्ण्य स मूर्खो राजा वैष्णवीं तां मायामात्मपत्नीं शुचीभूतां[3] माकलय्य मन्त्रिसेनान्यादीन् अपि तथैव प्रबोधयमानस्तूष्णीको[4]ऽभवत्।

एवमसत्यैकरचनाचतुरा, अनपेक्षितसाक्षिण्यः[5], शठा भार्या बहुधा[6] जडमतीन् पतीन् प्रतारयन्ति। न यक्षोऽहं तादृशो यत्र ते स्त्रीप्रपञ्चः फलिनो[7] भवेत्।

तरुतले स्थितः परिव्राजकस्तत्सर्वं निशम्य बद्धाञ्जलिर्यक्षं तं व्यजिज्ञपत् भगवन्नहं ते शरणागतः इतीहस्थेन मया यद्यद्वृत्तं समाकर्णि तदागो मे मर्षय। तस्यैव विद्याविनयवाक्येनातितुष्टो यक्षो निजगाद—अहं हि सर्वस्थान लब्धो यक्षो भवत्सत्योक्त्या चाति स तुष्ट इति वरं कमपि मत्तो याचस्व। एवमुक्तः परिव्राडुवाच यत्त्वं स्वभार्यां माभिकुप्यैपएव मदीयो वरः। एतदाकर्ण्य ततोऽप्यधिकं सन्तुष्टेन यक्षेण पुनरन्यं वरं ग्रहीतुमागृहीतः परिव्राड् अद्य प्रभृति जम्पती युवां स्वपुत्रं मां जानीतमिति प्रार्थयामास। तथाकर्ण्य सभार्यो यक्षस्तत्क्षणं प्रत्यक्षीभूय, तत्स्वीकृतिं दददवादीद् यद् मद् वराद् भवान् मर्त्यत्रावसद्भिर्जनैः[8] सह विवादे, द्यूते, कलहे च सर्वदा विजयी भविष्यति। एवमुक्त्वाऽन्तर्हिते यक्षे मनसा प्रणम्यातिवाहितत्रियामः परिव्राट् पाटलिपुत्रक-मागत्य तत्रत्यराजास्थानगतान् पण्डितान् विवादे पराजितवान्। तेनातितुष्टो भूपतिर्बहुसीमराज्ये तत्राकुर्वन्नपि[9] स्वदेशैकप्रियेण परिव्राजा तेन प्रत्याख्यात इति राजसात्कृत[10]कोशसञ्चितप्रत्नसद्रत्नसमुत्करेण नृपेण तेन सम्मानितः स परिव्राट् स्वदेशं परावृत्य यक्षप्रसादेन ससुखं न्यवसत्।

---

१ मनोज्ञत्वाद् वुञ्। २ 'अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः', चारित्रेणान्यानतिक्रम्य वर्तमानाहमिति भावः' वृत्ततश्चारित्रतो न चलामीतिनाद्यावधि चारित्रेण निन्दिता। ३ अभूततद्भावे च्वि', 'च्वौ चेति' दीर्घः। ४ 'शीले को मलोपश्च'। ५ 'साक्षाद् द्रष्टरि संज्ञायाम्' सतोना-तत्वान् ङीप्। ६ विभाषा बहोर्धाऽविप्र-कृष्टकाले'। ७ 'फलबर्हाभ्यामिनच्'। ८ 'देवमनुष्यपुरुषपुरु°' इति सप्तम्यन्तात् त्रा; मर्त्येषु वसद्भिरिति भावः। ९ 'देये त्रा च'। १० 'तदधीनवचने'।

शिष्यमुखादेव परिव्राडुपवर्णितकथामाकर्ण्य कुभार्याणा पतिवञ्चकतां निन्दन् सत्यमाहात्म्यञ्च सर्वथा स्तुवन् परमानन्दतुन्दिलो[1] मुनि परा कोटिं सन्तोषस्यावाप।

गोमुखमुखाच्छ्रुताभिरेव विधाभिर्विनोदकथाभिर्दिनान्यतिवाह्य विवाहदिवसे प्राप्ते पितुरन्तिकस्थो नरवाहनदत्तो नभस सहसावतीर्णं वैद्याधरं बल तन्मध्ये च ससदास्यदास्यमानस्वकीयदुहितरमागत विद्याधरेन्द्र स्फटिकयशसञ्चावलोक्य प्रत्युद्गतोऽर्घ्यादिना कल्पिताशेषस्वोचितदिव्यवैभवविध्यातिथ्यसत्कृति श्वशुर इति पूजयामास। स्फटिकयशा अपि च पूर्वप्रदिष्टा स्वकन्या शक्तियशस रत्ननिचयप्रपूरितायवत्सेशसुताय सुखसुखेन[2] सविधि प्रदाय पराकोटिमानन्दस्यानुभवन्निजावासमुत्पपात।

स्वशक्तियश सम्पन्नो नरवाहनदत्तश्चाप्यधुना स्फटिकयश प्रसूतशक्तियशो-द्विगुणितशक्तियश सम्पन्नो नवोढया बध्वा यथावश्यक यथाकाल यथायथ[3] द्वन्द्व[4] मन्त्रयमाण सुखमयानि दिनान्यनैषीत्।

इति कौमुदीकथाकल्लोलिन्यां तद्धितद्विरुक्तनिर्देशात्मक पञ्चम कल्लोल ॥

( समाप्तोऽय पूर्वार्द्धभाग )

नैषमेह पाणिनये गुरवे श्रीजयदेवमणये चापि।
विद्वन्मालामणये गुरुजश्रीरामशिरोमणये स्यात् ॥ १ ॥

---

१ 'तुन्दादिभ्य इलच्च'। २ 'अकृच्छ्र प्रियसुखयोरन्यतरस्याम्'। ३ 'यथास्वे यथायथम्।' ४ 'द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु'। ५ नमतेर्यङन्तात् स्त्रियामप्रत्यय, मुहुर्मुहुर्नतिरित्यर्थ।

कौमुदी–

# कथाकल्लोलिनी

## [ पश्चार्द्धभागः ]



## अथ गणनिर्देशात्मकः षष्ठः कल्लोलः

नमाम्यशेषविघ्नौघगारणं वारणाननम् ।
कारणं चर्द्धिसिद्धीनां दुरितार्णवपारणम् ॥

कामरूपेण स्पर्द्धमानो वत्सयुवराज एव शक्तियशसः रत्नप्रभायाः आद्या देव्यास्तावपि च मुदा मदनमञ्चुकाञ्च पलभ्य सुहृद्युक्तो निजपितृपार्श्ववर्ती समोदं कौशाम्ब्यां निवसन्नेकदोद्यानं गतो देशान्तरादागताभ्यां द्वाभ्यां

अन्यपत्नीप्राप्तौ– (भ्वादयः)

भ्रातृभ्यां राजपुत्राभ्यां सङ्गतोऽभवत् । स्वीकृतवत्सयुवराजकृतातिथ्ययोश्च तयोरेकतरस्तम् अगादीत्, 'देव, आसीन्निजारामरामणीयकाधरीकृतनन्दने, क्रीडासरसीभिः सम्वलिते, तुषारधव

1 गणकार्यारम्भे गणेशप्रणत्यात्मकमङ्गलस्यात्यावश्यकतया भ्वाद्यदादिसर्वगणप्रतिनिधिरूपतत्तद्गणीयधातुनिष्पन्नशब्दग्रथितश्लोकेनादौ गणेशनतिरूपं मङ्गलं नमामीति–इह नमामीत्यत्र 'नम्' इति भ्वादिगणधातुः । अशेष इत्यत्र च 'शिष्' इति रुधादिगणधातुः । विघ्न इत्यत्र विपूर्वकादादादिकात् 'हन्' धातोः कप्रत्ययः । ओघ इत्यत्र च 'उच' समवाये इति दैवादिकाद् घञि पृषोदरादित्वाच्चकारस्य घकारः । गारणमित्यत्र तौदादिकात् 'गॄ' धातोर्णिजन्ताल्ल्युट् । एवं वारणमित्यत्र क्रैयादिकाद् 'वॄ'धातोर्णिजन्ताल्ल्युट् । कारणमित्यत्र तानादिक 'कृ' धातोर्णिजन्ताल्ल्युट् । ऋद्धिरित्यत्र सौवादिकाद् 'ऋध' धातोः क्तिन् एवं सिद्धिरित्यत्र दैवादिकात् 'सिध्' धातोः क्तिन् । दुरितशब्दो दुरुपसृष्टात् आदादिकात् 'इण्' धातोः क्तान्तः । अर्णवशब्दश्च जौहोत्यादिकाद् 'ऋ' धातोः औणादिके नसि मत्वर्थीय वप्रत्ययान्तः ( धातोरस्यच्छान्दसत्वेऽपि 'अर्तिपिपर्त्योश्च' इतीत्वविधानसामर्थ्याल्लोकेऽपि तत्प्रयोगः ) पारणमित्यत्र तु चौरादिक 'पार' धातोर्ल्युट् प्रत्ययः । 2 स्पर्ध संघर्षे । 3. मुद् हर्षे । 4 भू सत्तायाम् । 5 गद् व्यक्तायां वाचि । 6 वट् सम्वरणे ।

स्फटिकभित्तिप्राकारप्राकारेण परिगते, जलप्रतिबिम्बितप्राकारच्छलेनोच्छलज्जलनिधिशङ्कया मैनाकमन्वेष्टुमन्तः प्रविष्टहिमवतेव महाखातवलयेन वेष्टिते[1], महापार्थिववरूथिनीवानेकरथ्यासङ्कुले, प्रजल्पता[2], पठता[3], गायता[4] च भुजङ्गजनसमाजेन क्षणमप्यपरित्यज्यमानमनोभवभवभावनभवने, स्वीकृतसतीव्रताभिरप्यसतीव्रताभिः[6], कृतसङ्गमाभिरपि कृतकुसङ्गाभिः[7], सनिमेषदर्शनाभिरपि निर्निमेषदर्शनीयाभिः[8] अङ्गनाभिरलङ्कृते वैशालाख्ये पुरे सुव्यवस्थापितवर्णाश्रमधर्मो द्वैधपुरस्कारानुगुण्यषाड्गुण्यप्रयोगचतुरः, मनुष्यलोकस्थितोऽपि गुणगणगरिम्णा सर्वलोकोपरिस्थितः, परमाणुसूक्ष्मयाऽपि क्रोडीकृतत्रैलोक्यया प्रज्ञया समुपेतः, सततन्तुव्यानोऽप्यसङ्ख्यगुणशाली, सर्वदाह्लादितलोकोऽप्येकदानानन्दितभूसुरनिकरः[10], उदात्तेनापि[11] स्वरितेन स्वचरितेन पवित्रितत्रिभुवनावनिः, स्वपरभार्यास्वजनपराङ्मुखोऽपि परस्वभार्यास्वजनसम्मुखः[12], अवनितापहार्यप्यवनितापहारी[13], सौजन्यैकरसप्रवृत्तिरप्यसौजन्य

---

(व्याख्या)

१ वेष्ट वेष्टने। २ जल्प व्यक्तायां वाचि। ३ पठ् व्यक्तायां वाचि। ४ गै शब्दे। ५ त्यज हानौ। ६ पतिव्रताभिरपि सीव्रतया स्वभावोग्रतया असहिताभिः। ७ कु पृथ्वी तत्सङ्गाभिः, भूमिसङ्गताभिः। ८ अति सुन्दरीभिः। ९ सततमिरनन्तुभिः सूत्रैः व्यातो विख्यातोऽपि असङ्ख्यैः गुणैः सूत्रैः शोभाशालीति विरोधः, सततन्तुर्यशः, गुणाः शौर्यादय इति परिहारः। १० सर्वदा सुखीकृतसर्वलोकोऽपि एकदा अनानन्दितो दुःखाकृतो भूसुरनिकरो द्विजवृन्दो येनेति विरोधः। एकदानेन कवलदानेनैव आनन्दितः समृद्धिं प्रापितो द्विजसमूहो यनेति परिहारः। ११ उदात्तेनापि स्वरितनेति विरोधः। उदात्तेन उत्कृष्टेनापि स्वरितेन स्वर्गविख्यातेन, सुरगणगुणितेनेति परिहारः। १२. स्वपरभार्यासु स्वेतरवनितासु भजनपराङ्मुखो गमनपराङ्मुखः, स्वजने आलिङ्गने वा पराङ्मुखोऽपि परधनवनिताग्रहणसम्मुख इति विरोधः। परा उत्कृष्टा या स्वभार्या स्वजना आत्मीयाश्च तत्सम्मुख इति परिहारः। १३ वनितानाम् अनपहारकोऽपि अवन्या भूम्यास्तापहारक। १४ सुजनस्वभावोऽपि असौजन्यप्रवृत्तिरिति विरोधः। सौजन्यप्रवृत्तिरपि असौ, जन्यनिपुणः, युधि स्थिर इति परिहारः।

निषण्ण, समिद्[1]व्यतिकरस्फुरितप्रभावोऽप्यकृशानुभावोपेत शत्रुघ्नोऽपि विश्रुत कीर्ति, यथार्थ प्रजापतिर्भूपति । यस्य राज्ये वैष्णवानामेव कृष्णवर्त्मनि[3] प्रवेश, सूर्योपलानामेव मित्रोदयेन[4] ज्वलनम्, वैशेषिकमते एव द्रव्यप्राधा[5] यम्, गुणानामेव भेदकभाव[6], धातूनामेव सोपसर्गत्वम्, पदानामेव विग्रह[7] । कुकविकाव्येषु एव यतियोगभ्रंशदोष समदृश्यत । स च यथा न धर्माऽ सद्[8]त्, नार्थकोशोऽव्य[9]यीत्, न राजलक्ष्मीर्व्यहयात्[12], न शरीरसैन्यबलम् अपाम्[13]पीत्, न मित्रवर्गोऽम्लौ[14]सीन् तथा राज्य कुर्वन्नाध्यात्मिकतत्त्वमीमांसा[15] शीशान्[16] समवेतस्वा तो ऋजुवृत्तिभिर्विद्वद्भिरदादासिष्ट[17] वीर्भ सचित्तेभ्यश्च अ[18]नु गुप्सिष्ट । तस्य द्वैमातुरयो पुत्रयोरावयोरेकतरो रुचिरदेवनामाहमपरश्चाय पोतक इति । तयोरावयोरेका प्रजविनी हस्तिनी मामकीना, अस्य च द्वौ तुरगौ । तेषा जवाधिक्यविषये समेध[20]माने विवादेऽह करिणीं जवाधिकां निगदामि[21] तुरगौ चाय विक[22]त्थते इति तेषा जवेऽन्तर निर्णेतु न त्वया विनाऽन्य कश्चित् क[23]ल्पतेऽतो ऽस्मद्गृहमुपगत्य तत् परीक्षेथा[24] । रुचिरदेवेनेत्थमनुनाथितो[25] वत्ससूनुरश्वशा

---

१ समिधां काष्ठाना व्यतिकरेण सम्पर्केण स्फुरित प्रभावो यस्यैवभूतोऽपि कृशानोरग्नेर्भावेनानुपेत इति विरोध । समित् सग्राम तत्सम्पर्केण स्फुरित प्रभावो यस्य, अकृशेन उत्कृष्टेन अनुभावेन तेजोविशेषेण चोपेत इति परिहार । २ शत्रुघ्नो दाशरथि अपि विगता श्रुतकीर्तिस्तद्भार्या यस्यति प्रतीयमानोऽर्थ । शत्रुप्रहारकोऽपि विश्रुता प्रख्याता कीर्तिर्यस्येति वास्तवि कोऽर्थ । ३ कृष्णवर्त्मा अग्निस्तत्र प्रवेश इति प्रतीयमानोऽर्थ, कृष्णमार्गे इति तात्त्विकोऽर्थ । ४ सूर्योदयनेत्यर्थ, न सुहृत्समृद्ध्या जनेष्वीर्ष्येति भाव । ५ द्रव्याणाम् पृथिव्यादीनाम् महत्त्वम् न धनस्येति भाव । ६ विशेषणभाव, न जनेषु पारस्परिकपृथककरणबुद्धि । ७ उपसर्गा प्रादयो रोगाश्च । ८ पृथक् करण, कलहश्च । ९ अशु अध पतने । १० पदॢ विशरणगत्यवसादनेषु । ११ व्यय गतौ । १२ हय गतौ । १३ क्षि क्षये ( ह्मयन्तेति वृद्ध्यभाव )। १४ ग्लै हर्षक्षये । १५ मान पूजायाम् । १६ शान तेजने । १७ दान खण्डने ततो दानेराजवे सन् । १८ बध बन्धने । १९ गुप गोपने । २० एध वृद्धौ । २१ गद व्यक्ताया वाचि । २२ कत्थ श्लाघायाम् । २३ कृपू सामर्थ्ये । २४ ईक्ष दर्शनाङ्कनयो । २५ नाथ उपयाच्यायाम् ।

रसात्तदनुरोधाच्च परम् आह्लादमान[1] तयोरभ्युपेत्य तदानीतातिजवाश्वरथम् अधिरुह्य[2] ताभ्यां सह वैशाखपुराय प्रातिष्ठत[3]। अतित्वा[4] चाचिरमेव तत्पुरं प्राप्य निशाकरो यथा तन्नगरनरनारीभिरभिनन्द्यमानस्तदुत्तमं पुरं प्रविवेश। तत्र च युवराजः पूर्वैः प्रतिष्ठितस्य कामस्य रतिप्रीतिपदं शृङ्गारैकमयं मन्दिरं निकषा मन्दिरं रुचिरदेवस्य, तत्पुरस्कृतः प्रीत्या प्रविश्य वरवाजिगजाकीर्णे तदागमनसोत्सवसमूर्जितश्रियि तद्गृहे साकृनोऽप्यद्भुताकृतिं कन्यां जयेन्द्रसेनां रुचिरदेवस्वसारं समैवालोकि[5]ष्टेति तद्रूपाकृष्टः स विस्मृ[6]तप्रवाससमुद्भूतस्वजनविरहः प्रेमप्रविसप्रैफु[7]ल्लनीलाब्जजै[8]दमालयेव स्वयंवरे तयापि तत्क्षणमेवाव्रियत।

अन्येद्यू रुचिरदेवेन पोतकानीतजवितुरगयुगले स्ववशावेगबलेन जिते यावदेव वत्सेशसुतोऽभ्यन्तरं प्रविशति तावदेव तत्पितृरूप्यो दूतस्तत्पार्श्वमा[9]व्रज्य तं प्रणं सीत्[10] अभ्यापन[11] च—'देव, उद्यानतोऽनिवेद्यै[12]तावद्दूरमटितमजितं स्वामाकर्णयतो विगतधृतेर्देवस्य वत्सराजस्य हृदयमनुषङ्गं स्वदनवलोकनमुपजातासन्तोषं जोषं जोषमोष[13]तीति स्थानादस्मात्यक्तैहत्यभ्यासक्तिना सत्वरमित्वरेण भवता भवनीयम्। एवं स्वानवलोकनेन पितुरवस्थां प्रियोपल[14]भ्य ध्यायन्तं[15] दोलायमानमानस नरवाहनदत्तं दूरादेव नमप्रतिहर्षञो जयघोषमुच्चरन्[16], तस्य भाविविद्याधरार्धीद्रत्वं विद्विषो विनाशकारित्वञ्च पणायन्[17] सार्थवाह एकोऽवर्दत्[18], 'अचिरादेवाच्युतगुणं स्वालौकिककान्त्या दिवम् आक्रमन्तं भवन्तं खेचरा ईडयन्ति[19]'। एवं स्तूयमानेन युवराजेन तेन सत्कृतो निजवृत्तान्तं वर्णयितुमानुपूर्व्यो महावणिक् एवं स्ववृत्तं वक्तुम् आरभ[21]त—

अस्ति भूलोकमौलिमालिकामतल्लिका चम्पा नाम नगरी। अनुशास्ति च तत्र भवदत्तो नाम भूयो भर्ता। यत्र स्वराष्ट्रपरराष्ट्रनीति सम्यङ्निर्वह[22]ति। अकृता-

१. ह्लादी सुखे च। २. रुह बीजजन्मनि प्रादुर्भावे च। ३. ष्ठा गतिनिवृत्तौ। ४. अत् सातत्यगमने। ५. लोकृ दर्शने। ६. स्मृ चिन्तायाम्। ७. फुल्ल विकसने। ८. जि जये। ९. व्रज गतौ। १०. णम् प्रह्वत्वे शब्दे च (यमरम नमातां सक् च)। ११. भाष व्यक्तायां वाचि। १२. अज गतिक्षेपणयोः। १३. उष् दाहे। १४. डुलभष् प्राप्तौ। १५. ध्यै चिन्तायाम्। १६. चर गतिभक्षणयोः। १७. पण व्यवहारे स्तुतौ च। १८. वद व्यक्तायां वाचि। १९. ईडु पादविक्षेपे। २०. ईडिर् प्रेरणे। २१. रभ राभस्ये। २२. वह प्रापणे।

नुभावोऽपि च यो निजप्रतापातनुतनूनपाता विद्वेषीन्धनौघदहा दहति[1] दारुण दुर्हृद । न यस्य राष्ट्रे धमति[2] दरिद्रातिदरिद्रेष्वपि बुभुक्षा संधुक्षित[3]क्षुधित जाठराग्निम् । न यो नमति[4] समुद्दामदक्षिदतिहरीनरीन्[5] । न च गुरुजनसेवाया युच्छति[6] । न दायादान् उत्त्रस्यति[7] । किं बहुना, य स्वयशालसद्गुण्यपुण्ययशोवा सामि चोर्वति[8] । असौ न्य ष्ठीवति[9] । स्वकायायत्ययानत्ययाशालतारसै पीवति[10] । त्रिपक्षिविजिगीषानि श्वासैर्जीवति[11] । स्वकीयाप्रतिमप्रतिभया [12]नवनव विषय जातम् अभ्यूहते[13] । विबुधसहकृतो विविधशास्त्राण्यवगाहते[14] । वृन्दारकवृन्दवन्दिनोऽवति[15], सन्मार्गप्रतिबन्धिनो मवति[16] । यस्यानुशासने वर्णाश्रमधर्ममनुसृत्य यथावस्थमाश्रमेषु स्वाधीनोऽपि गृहीतब्रह्मचारिव्रतो गुरुजनेभ्य साङ्गवेदोपवेदान् शिक्षते[17] भिक्षते[18] च, विविधविज्ञानशाला[19]नरीक्षते संवीक्षते[20] च । कृपावलब्ध यत्र निरीतिभीति निवसति[21] विघसति[22] च । ज्ञातीनश्च यथावृत्तिसमुपलब्धिसमुपजातप्रीति विहसति[23], विलसति[24] च । एव वर्तमाने सुखमयसाम्राज्ये तत्राभव देकोऽतिधनाच्य कुसुमसाराख्योमहावणिक् । प्रत्यह स देवान् अववन्दत[25] । वणिज्याभ्यासक्तोऽपि न सुपथोऽस्पन्दत[26] । दीनेभ्योऽनुदिन यत्किञ्चिद्विश्रणन्[27] एव अमोदिष्ट[28] । ज्ञातीन् सुखयित्वैव सोऽह्लादिष्ट[29] । प्रतिपर्व स्नानार्थं स गङ्गा व्यसेधत्[30] । दारिद्र्यार्दितार्दित स बहूना प्राणान् अगोपायीत्[31] । व्यवहृतौ धूर्तैर्वञ्चितोऽपि न स्वय तान् अधूपायीत्[32] ।

---

१ दह भस्मीकरणे २ ध्मा शब्दाग्निसंयोगयो । ३ धुक्ष सन्दीपने । ४ णम प्रह्वत्वे ५ उद्दामा दक्षिरहकृतिरेव दतिश्चर्मपात्र ता हरन्तीति उद्दामदृक्षिदतिहरय, पशव तान् (हरतेर्दृतिनाथयो पशौ इति इन्) ६ युच्छ प्रमादे । ७ उत्त्रसी वित्रासे (प्रायेणाय विपूर्वक) । ८ चार्वृ वसने । ९ ष्ठिवु निरसने । स्वकीयाय आयत्यय उत्तरकालीन शुभावहो विधिस्तस्य अन ययस्य अविनाशस्य या आशालता तद्रसै । १० पीव स्थौल्ये । ११ जीव प्राणधारणे १२ (प्रकारे गुणवचनस्य) । १३ ऊह वितर्के । १४ गाहू विलोडने । १५ अव रक्षणे । १६ मव बन्धने । १७ शिक्ष विद्योपादाने । १८ भिक्ष भिक्षायामलाभे लाभे च १९, २० ईक्ष दर्शनाङ्कनयो । २१ वस निवासे । २२ घस्लृ अदने । २३ हस हसन । २४ लस श्लेषणक्रीडनयो । २५ वदि अभिवादनस्तुत्यो । २६ स्पदि किञ्चिच्चलने । २७ श्रण दाने । २८ मुद हर्षे । २९ ह्लादी सुखे च । ३० षिध गत्याम् (सेधतेर्गतौ) । ३१. गुपू रक्षणे । ३२ धूप सन्तापे (गुपूधूप०) ।

इत्थमनिशं जीवनं यापयन् धार्मिकधुरीणः स शङ्कराराधनतो मां चन्द्र-सारारूयमेकमेव पुत्रमलभत[1]। एकदा देवयात्रामालोकयितुं गतोऽहमपरानाढ्या-नर्थिभ्यो ददमानान् अद्राक्षम्[2]। अतो दानश्रद्धया धनार्जनेच्छुः पितुपार्जितया बह्वयापि सम्पत्त्याऽसन्तुष्टो नानारत्नप्रपूरितप्रवहणमारुह्याम्बुधिवर्त्मना द्वीपान्तरं गन्तुं प्रावर्तिषि[3]। दिष्ट्या चानुकूलेन वायुना प्रेरितं तत्प्रवहणमल्पैरेव दिनैरभीष्ट तद्द्वीपं प्राप किन्तु तत्रत्यो राजा मामर्थलोभेन बद्ध्वा कारागारे न्यक्षिपदिति निरयनिभे तत्र क्षुत्तृडर्दितैः क्रन्दद्भिर्[4]दुष्कृतिभिः प्रेतैरिव सहस्थितस्य तस्य मम कुलाभिज्ञस्तत्र निवासी महीधराख्यो महावणिक् ममान्वपादि राजानं विज्ञपयन् 'निर्दोषस्यास्य लम्पानिवासिनो वणिक्पुत्रस्य बन्धनाद्यनुचितमव-धारकास' इत्यगादत्[5]। एवं बोधितो नृपतिर्निजान्तिकं मामानाययत्। सादरं तेन तत्र सम्मान्यमानश्चाहं तन्मित्रोपाश्रयेण व्यवहारान् कुर्वन् महता सुखेन न्यवसम्[6]।

तत्रैकदा वसन्तोत्सवे शिखराख्यस्य वणिजो वरकन्यकामालोक्य कन्दर्प-दर्पोर्णवोर्म्येव हृतहृदयस्तत्पितुरन्तिकं गत्वा तामहम् अयाचिषि[7]। स च क्षण-मन्तर्विचिन्त्य अवदीद्[8] यत्कस्माच्चित्कारणादेषा साक्षाद् दापितुम्[9] अशक्येति यानेन सिंहलेषु स्वमातामहसमीपे प्रहितेह याचितापि तत्र गत्वा कार्यमेतद्यथा-सेरस्यति तथा कर्तुं सन्दिष्टेति तत्र सेधित्वा[10] एषोपयन्तव्या। एवमुक्त्वा ससम्मानं मां गृहार्थं विसृज्य शिखरोऽन्येद्युस्तां कन्यां सपरिच्छदे याने समारोप्य पाथोधिपथेन सिंहलान् प्रेषितवान्। अहञ्च तद्वृत्तं श्रुत्वा समुत्सुको यावदेव तत्र गन्तुम् अभिकाङ्क्षे[11] तावद्विद्युन्निपातनिभोऽप्रियं वार्ता प्रादुरभूद् यद् येन प्रवहणेन शिखरस्य सुता गता आसीत्तदर्णवे निमग्नं तत्रस्थानखिलानपि न्यम-ज्जयत्। तद्वार्तामाकर्ण्य भग्नधैर्योऽहं स्थले स्थितोऽपि निरवलम्बे शोकसागरे न्यपप्तम्[12]। तथापि वृद्धैः 'दुर्दमनीय एव भवितव्यताप्रपञ्चो विकरालः काल ।

---

*१. डुलभष् प्राप्तौ। २. दृशिर् प्रेक्षणे। ३. वृतु वर्तने। ४. क्रदि* आह्वाने रोदने च। ५. गद् व्यक्तायां वाचि। ६. वस निवासे। ७. डुयाचृ याच्ञायाम्। ८. वद व्यक्तायां वाचि (अतो हलादेर्लघोः)। ९. दाण् दाने। १०. षिध गत्याम्। ११. काक्षि काङ्क्षायाम्। १२. पत्लृ पतने।

महतां राज्ञामपि प्राणान् एष मूषक इव महार्हं वस्तु प्रत्यक्षमप्रत्यक्षं वा मूषति[1] । अजगर इव प्राणिनो दूरान्निगलति[2] । कामयमानोऽपि[3] सतीं गतिं कामयमानो ना नावलोकयते । क चराचरेषु सुहृदप्रहादस्य पलायितुं[4] क्षमते[5] । को वेम कक्ष नाय जंगृहे[6] । तथापि जीवन्[7] नर सर्वदुराशासेना जयति[8] । अध्रुवत्यपि सर्वस्मिन्नस्मिन् जगति विविधवस्तुजातमात्मत्वभावनया मेदते[9] । नात्मनोऽध्रौव्यं[10] स्रम्भते इति निश्चित्य *सचेलोशीरादिवासितं, सज्जनचित्तवत्स्वच्छं, पयो रसादिकं वा धयति*[11] । विविधामोदवह वस्तु जिघ्रति[12] । नानादृश्यजातं पश्यति । श्रुतिमधुरशब्दं शृणोति[13] । स्पर्शसुखदायि च वस्तु स्पृशति । मधुराम्ललवणादिषड्रसविशिष्टमास्वाद्यम् आस्वादते[14] । स्वार्जितयोगक्षेमाय प्रयतते[15] । अतो भगवत्समीहितेऽस्मिन् व्यतिकरे भवतापि न विस्मयमानेन[16] भुवेल्लिमम्' । एवमाश्वास्यमानो विविधाशाकशाघातैर्मनोरथरथ्य वाहयन् तद्द्वीपगमने मतिमकार्षम् । एवं विविधसद्भावोपचितो राजप्रियोऽपि पोतारूढोऽहं तस्मात् अचलम्[17] । किन्तु मार्गेऽकस्माद्घोरेण वारिदतस्करेणाक्रान्तो विरुद्धेन बलिना वायुना विधिना च प्रेर्यमाण सपरिजनधनस्तम्पोतोऽर्णवे न्यमाङ्क्षीदिति काष्ठफलकमेकमाश्रित्य शनैश्शनैरहं कल्लोलवेल्लितं[18] सलिलनिधिपुलिनमलप्स[19] । तत्र स्थितश्च दु खार्तो दैवं निन्दन्[20] तटोपान्तपतितमष्टापदाङ्गुलीयकमवाप्य तद्विक्रयोपलब्धेन धनेन तटनिकटग्रामेऽशनसामग्रीं विनिमय[21] क्रीतवस्त्रयुगलो मनागविगताधिवाहक्लमोऽभवम् । क्षणं च तत्र विश्रम्य दयिताविरहीतस्ततो दृष्टिं विक्षिपन् सिकतासम्भृताया भुवि विचरन्नेकत्र वन्यवेषामप्यतिशोभमाना कन्यामेकामालोकिषि[22] । अपि मम भाग्येन सैवेयं भवेदिति चिन्तयता, स्पन्दमानेन तदा वामेतरेणाक्ष्णा विज्ञापितशुभोदर्केण मया तन्वि, प्रासाद-वासार्हाऽपि का त्वमरण्येऽत्र विचरसि[23]' इति' पृष्टा । किन्तु न सा किञ्चिद् अशंसत[24]

---

१ मूष स्तेये । २ गल अदने । ३ कमु कान्तौ । ४ अय गतौ । ५ क्षमूष सहने । ६ ग्रह उपादाने तथा गृहू ग्रहणे । ७ जीव प्राणधारणे । ८ जि जये । ९ ञिमिदा स्नेहने । १० स्रम्भु विश्वासे । ११ धेट पाने । १२ घ्रा गन्धोपादाने । १३ श्रु श्रवणे । १४ स्वाद आस्वादने । १५ यती प्रयत्ने । १६ ष्मिङ ईषद्धसने । १७ चल सञ्चलने । १८ वेल्ल चलने । १९ डुलभष् प्राप्तौ । २० णिदि कुत्सायाम् । २१ मेङ प्रणिदाने ( मयते रिदन्यतरस्याम् ) । २२ लोकृ दर्शने । २३ चर गतिभक्षणयो । २४ शंस व्यक्तायां वाचि ।

दयस्व[1] चेति गिराऽनयाऽनभ्रवृष्ट्येव शुष्यच्छस्यक्षेत्रमभिवृष्य यमुना मा स्वपि तुमतङ्गस्याश्रमम् अनैषीत्। स च मतङ्गो मुनी रूपिणीं मनोराज्यसम्पत्तिमिव वेला मह्यम् अदयिष्ट[2]।

तया च वेलया ससुख तत्र निवसन् सरस्येकस्मिन्नम्भोऽवगाहनकलिं कुर्व न्नपश्यन्नेकदाऽह शुन्धन्त[3] मुनिं मतङ्गमम्भसा अभ्यषिञ्चम्। एतेन स मुनिम स्य तम् अचण्डिष्ट[4], अशप्त[5] चावाभ्या वियोक्ष्यमिति तदवहेलाभग्ननिजखेलासिन्धु वेला, वेला, क्षमा याचमाना मुनिपादयो प्रपर्यपप्तत्[6]। तेन च शान्तो मुनि करेणुवगनाश्वयुगनतृभाविविद्याधरेश्वरनरवाहनदत्तदर्शनावधिं तच्छाप निर्दिश्य सम्पादितस्नानादिक्रियो हरेर्दर्शनार्थं व्योममार्गेण श्वेतद्वीपम् अशिश्वियन्[7]।

एव विच्छिन्नदयितोऽपि वन्यजीवनेनातिखिन्नो वनितावियोगभयनुन्नोऽह स्वदेश परावर्तितुमु सुकोऽभवम्। अतोऽम्बुधितटमवाप्य तदानीं समुपलब्धनिजसुहृ द्वणिक्प्रवहण भार्यामारोप्य यावदेवाहमारुरुक्षामि तावदेव समीरणस्तत्पोत दूरमहरदिति हृतभार्यो विह्वल्य[8] भूमावहमपतम्। तदैव दैवयोगेन तत्रागत कश्चित्तापस तदवस्थ मामवलोक्य निजकामण्डलववारिप्रक्षेपेण सचेतन कृत्वा ऽऽश्वासनपूर्वकं निजाश्रममानीतवान्। तत्र च यथावृत्त पृष्ट्वा श्रुतशापव्यतिकर स्वप्रणिधानेन सावधिं शापमवधार्य मदीय धृतिबन्धम् अमीवीत्[9]। तदनन्तर ता प्रिया पुनर्विच्छन् भग्नवहनोत्तीर्ण सखाय वणिग्वरमवाप्य लङ्घमानोऽपि[10] दिवसानुल्लङ्घयन् देशान् दुर्गमान्, क्रमाद् वैशाखपुरमवाप्य वत्सेश्वरसद्मसमु त्तामणेर्भवत इहागमनमहमश्रौषम्[11]। हरिन्त्या च विजिताश्वगोयुग भवन्तमा लोक्य विगतशापभारोऽहमधुना साधु वणिग्भिरानीता सम्मुख गता ता प्रिया वेलामहमिह अदर्शम्[12]। अतो यमुनाप्रत्तसद्रत्नहस्तया तया त्वत्प्रसादेन सयो जित समुत्तीर्णशापमहार्णवोऽहमिह प्रणन्तु त्वामायात इति सदयितो निर्वृत्तो ऽहमस्मिन् समये स्वदेशमये[13]।

इत्थ पञ्चितनिजप्रश्ने ऽञ्चिते[14] च प्रणम्य चन्द्रसारेऽवलोकितवत्सराजास्म

---

१ देङ् रक्षणे। २ दय दानगतिरक्षणहिंसादानेषु। ३ शुन्ध शौचे। ४ चडि कोपे। ५ शप आक्रोशे। ६ पत्लृ पतने (पत पुम्) तत नेर्गदनदेति णत्वम्। ७ टुओश्वि गतिवृद्ध्यो। ८ ह्वल चलने। ९ मव बन्धने। १० लघि भोजननिवृत्तौ। ११ श्रु श्रवणे। १२ दृशिर् प्रेक्षणे। १३ अय गतौ। १४ अचि गतौ।

क्षमाहात्म्यातिहृष्टो रुचिरदेव सोपचारवृत्तिधारिरंसितां सुलक्षणीं रत्नवसार करेणुतुरगोसमयुक्तां जयेन्द्रसेनां नरवाहनदत्ताय ददे[1]। सोऽपि च तया सह रुचिरदेवमामन्त्र्य कौशाम्बीमुपढौकितोऽन्याभिर्मदनमञ्चुकादिभिर्निजप्रियाभिः समेधितो[3] मेधितो[4] यथेच्छं क्रीडन्[5]हरहर्[6]रमत। ( इति भ्वादयः )

तत्र चैव स्थितोऽवाप्ततदतिसुन्दरभार्योऽसावप्सरसामपि सौन्दर्यम् ऋती-(अदादयः) यमान वासेशो बहुभार्योऽपि तासामिमां देवीं मदनमञ्चुकामेव रुक्मिणीं माधव इव बहु अवेदीत्। यथासमयमनुदिनं तया सह आस्त, अख्यत्[10], अलिक्षत्[11] इत्यधिक्षत्[12] तयोर्दाम्पत्यप्रीतिः।

एकदा स्वप्ने[13] वासेशसुतोऽपश्यत् यत्समसाऽऽगत्य कयाचिद्दिव्यया कन्यया ऽहमपहृते। एव स्वप्नक् एव स महाभागोऽजागो[14] धनच्छायपादपे तावच्छिला-शिलातले मलयाचले च स्थितमात्मानमलभत। यत्र विविधा वल्लर्यस्तदगतरून् ऊर्णाविषु[15], समयूरीका मयूरा व्यर्[16]विषु। विकचपुष्पोपात्तसुरभिगन्धिगन्धवहा अवान्[17]। सुधाधवलितशीतांशुरश्मयश्च अर्भान्[18]। तत्रेदमित्थं रामणीयकमवलोक्य नरवाहनदत्तोऽचिन्तयद् यद् निजालौकिकप्रभाविभासितासिलकाननविभ्रमा-ह्लनौषधिनिभा विभावर्यामियमिह का मामानीतवतीति तां जिज्ञासुरलीकमुत्सुकं कृत्वा लज्जावनतमुखीं तां मलयमिव धीर्येण अवोचत्[19], 'प्रिये, मदनमञ्चुके, मामालिङ्गय त्वं क यासि[20]? राहि[21] मे प्रतिवचनम्, पाहि[22] मम जीवनम्। एहि[23], एहि, त्वदाश्रित एवाह श्वसिमि। त्वत्परिरम्भ्याद्य न वश्मि[24] धारयितुमात्मानम्

---

१. दद् दाने ( न शसददवादिगुणानाम् )। २. ढौकृ गतौ। ३ सच्चक्रकारेण एधित समृद्धिं गत। ४ मेधृ सङ्गमे। ५. क्रीडृ विहारे। ६ रमु क्रीडायाम्। ( इति भ्वादयः )

(अदादयः) ऋतिरिति सौत्रोधातु जुगुप्सार्थकः। ७ (आम्रेडितम्)। ८. विद ज्ञाने। ९ आस उपवेशने। १० चक्षिङ् व्यक्तायां वाचि ( चक्षिङ ख्याञ्, अस्यतिवक्तिख्यातिभ्योऽङ्)। ११ लिह आस्वादने ( शल इगुपधादनिटः क्सः )। १२. दिह उपचये। १३ ञिष्वप् शये। १४ जागृ निद्राक्षये। १५ ऊर्णुञ् आच्छादने। १६ रु शब्दे। १७ वा गतिगन्धनयोः ( लङ् शाकटायनस्यैव )। १८ भा दीप्तौ। १९. ब्रूञ् व्यक्तायां वाचि ( ब्रुवो वचिः )। २०. या प्रापणे। २१ रा दाने। २२ पा रक्षणे। २३ इण् गतौ। २४ श्वस प्राणने। २५ वश कान्तौ।

इति । एवमुक्ता सा कन्यका तद्दयितारूपं धृत्वा तमालिलिङ्गेति स चाप्युन्मीलितलोचनस्तां निजपत्नीस्वरूपां सस्मितं कण्ठे गृहीत्वा, 'अहो मम विज्ञानम्,' इत्युक्त्वा उदश्वसीत्[1]। किन्त्वेतेन तदाशाविरुद्धं व्यक्तत्रपा सा स्वकीयं रूपं प्रदर्श्य तम् अचष्ट[2], 'आर्यपुत्र, स्वयंवरां मामिदानीं पत्नीरूपेण स्वीकर्तुं त्वं संमुड्ढि[3]' एवमुक्तो नरवाहनदत्तो गान्धर्वेण विधिना तां विवाहितवानिति तया सहैव सा रात्रिस्तस्य व्यत्यगात्[4]।

प्रातश्च स तत्कुलजिज्ञासया दयितां तां युक्त्योवाच, 'प्रिये, अपूर्वामहमेकां कथां त्वां वच्मि[5] तां त्वं निजश्रुतिपथमवतारय—

आसीदेकस्मिंस्तपोवने ब्रह्मसिद्धिनामा कश्चिन्मुनिः। निजाश्रमसरसि स नित्यं त्रिसन्ध्यम् अनिङ्क्त[6]। तपसि स्थितश्च सोऽशनपानादिकं सर्वम् अत्रङ्क्त[7]। वल्कलं वसानः[8] अपि न शीतवातादिना प्रैरिष्ट[9]। निजतेजोऽनल्पमभिवर्धयन्नपि प्रचण्डाग्नौ प्रज्वलितचतुर्दिगनलोऽज्वल इव स मध्यमध्यासिष्ट[10]। एवं शमदमादिनाऽस्मेन्द्रियाणाम् ईशानः[11] स मृडम् ऐडिष्ट[12]—किन्तु न यदा तदभीष्टसिद्धिज्योतिरभ्युदयेन तद्धृदयम् अचकाशत्[13] तदा परिवृत्तसकलसिद्धिप्यापृति स समाधावजागरीत्[14] इति कालान्तरे घनजटोर्णुतास्यः[15] स शिवात्परां कोटिं सिद्धेरवाप।

एवं योगसिद्धस्य तस्य निजाश्रमे निवसतो गुहायामेकस्यामेका जरती शिवा अवात्सीत्। एकदा दुर्दिने भक्ष्यार्थं बहिर्निर्याता सा वदाविरलेपोद्दामदृप्तो वन्यद्विपो हन्तुम् अभ्ययौत्[16] इत्युभयो कृपालुर्मुनिः क्रोष्ट्रीं तां करिणीं चकार। एतद् दृष्ट्वा तस्यामनुरक्तो हस्ती तामप्रुष्णुत्[17]।

स च वारणस्तया साकं सानन्दं भ्रमन्नेकदा तदर्थं पद्मान्यानेतुं प्रस्नुवन्म-[19]धुजलजोर्णुतजलजलाशयमेकमुपेतः शारदपङ्कनिमग्नोऽशनिनिर्दलितपक्षो भ्रष्टोऽचल

---

१. श्वस प्राणने (रुदश्च पञ्चभ्य) इति लडरितपि ईट् (श्वयन्तेति लुङि वृद्ध्यभावो वा)। २ चक्षिङ व्यक्तायां वाचि। ३ वश कान्तौ (लोटो हि)। ४ इण् गतौ (इणो गा लुङि)। ५ ब्रूञ् व्यक्तायां वाचि। ६ वच् परिभाषणे। ७ अस् भुवि। ८ णिजि शुद्धौ। ९ वृजि वर्जने। १०. वस आच्छादने। ११ ईर गतौ कम्पने च। १२ आस उपवेशने। १३. ईश ऐश्वर्ये। १४ ईड स्तुतौ। १५ चकास् दीप्तौ। १६ जागृ निद्राक्षये। १७ उर्णुञ् आच्छादने (ऊर्णोतेर्णुवद्भावो वाच्यस्तेन श्युक किरतीतीडभाव)। १८. चु अभिगमने। १९, ष्णु प्रस्रवणे।

इव पङ्कान्तर्विचेष्टितुं नापारयदिति तथाऽवसन्नं तमवलोक्य सा वशा शिवा तत्क्षणमेव तं परित्यज्य वारणान्तरमाश्रित्य क्वापि ययौ[1]। किञ्चित्कालानन्तरञ्च पूर्वविश्लिष्टा तस्य निजा करेणुका निजपतिमन्विष्यन्ती दिष्ट्या तमेव प्रदेशं प्रायासीत्[2] इति भद्रजातिः सा पङ्के निमग्नं निजपतिं निरीक्ष्यातिदुःखिनी तमनुसर्तुं ततः प्रविष्टा स्वयमप्याकण्ठं पङ्के निमग्ना सञ्जाता। तत्कालञ्च तेनैव मार्गेण सशिष्यो महासिद्धिर्निरगात्[3]। वशानागौ च तथा पङ्कान्तर्निमग्नावुद्वीक्ष्यातिकरुणापरवशः प्रभूतबलैः शिष्यैस्तौ पङ्कान्तरादुद्धारयामास। एवं मृत्योर्वियोगाच्चोत्तीर्णौ तौ तस्मिन्मुनावपयाते यथाकामं विजह्रतुः। इत्थमुत्तमजन्मानस्तिर्यञ्चोऽपि न निजं प्रभुं प्रियं चोज्झन्त्यपि स्वापत्तेस्तारयन्ति। हीनजात्युद्भवाश्चञ्चलात्मानश्चैवं नैसर्गिकस्नेहपूर्णा न भवन्ति।

नरवाहनदत्तोक्तमेतदाकर्ण्य दिव्यकन्यका सा सर्वं तदाशयम् अवेत्[4] अब्रवीच्[5] च, यद्भवदुक्तौ न कोऽपि यद्यपि संशेते[6], तवाभिप्रायश्चाहमभ्युपायम्[7], तथापि, आर्यपुत्र, अहमपि कथामेकामुपवर्णयामि श्रुत्वा तामयं मत्तः स्वहृत्तः तद्भावमुपगत्य मद्विषयिणीं शङ्कां सर्वां त्वं परिमृड्ढि[8]—

'कान्यकुब्जे शूरदत्ताभिधान आसीदेको द्विजः। ब्राह्मणाः प्रायः दरिद्रति[9] किन्तु स तत्रत्यबाहुशक्तिनामकमहीपतेरमात्य इति ग्रामशतम् ईशाते[10]। पतिदेवता तस्य वसुमतीनामभार्या वामदत्ताख्यं भव्यं पुत्रं प्रासविष्ट[11]। सत्पथसद्व्याकरणादिसंस्काराश्च सोऽचिरादेव सर्वा विद्या अध्यगीष्ट[12]। यौवनमापन्नश्च शशिप्रभां भार्यां परिणीय कालेन सभार्ये परेते पितरि तथैव भार्यया सह गार्हस्थ्ये प्रावर्तत। किन्तु अविदितैस्तस्य[13] किञ्चित्कालानन्तरं सा भार्या दैवात्स्वेच्छाचारिणी समवाप्तशाकिनीसिद्धिश्च संवृत्ता।

एकदा राजसेवार्थं राजकटकमुपाश्रितं वामदत्तं निजगृहादुपेत्य तत्पितृव्यः

---

१. इण् गतौ। २. या प्रापणे। ३. इण् गतौ। ४. विद ज्ञाने। ५. ब्रूञ् व्यक्तायां वाचि। ६. शीङ् स्वप्ने। ७. इण् गताविस्यस्य लङः उत्तमैकवचनम्। ८. मृजू शुद्धौ ( [illegible]—इति पदे [illegible] )। ९. दरिद्रा दुर्गतौ ( श्नाभ्यस्तयोरातः )। १०. ईश ऐश्वर्ये। ११. षूङ् प्राणिगर्भविमोचने। १२. इङ् अध्ययने ( विभाषा लुङ्लृङोः, गाङ् कुटादिभ्योऽञ्णिन्ङित्, घुमास्थागापाजहातिसां हलि )। १३. विद ज्ञाने ( विदः शतुर्वा )

अवेग्[1] यत्तवैषा भार्या त्वदीय महिषपाल संपृक्ते[2] अतोऽस्मत्कुलमिदानीं वर्णसङ्करता प्राप्त सद्विनष्टम्। एतदाकर्ण्य वामदत्तो निजपितृव्य तत्रैव निजस्थाने स्थापयित्वोदायुधो निजसदनमुपेत्य यावन्निभृत पुष्पवाटिकाम् आस्ते तावत्क्षणादेवोपपतिसमुत्सुका विविधाहारहस्ता तद्भार्या तत्रैव उपैद्। भुक्तवता च तेन साक निंस्यमाना[3] अस्वाप्सीत्। तदवलोक्य वामदत्तो निजायुधमुद्यम्य 'आ, पापौ अद्य इत क्व इतं[4]' एवमुक्त्वा तौ हन्तुम् अवेट्[5]। एतेनानार्या तद्भार्या सहसा विनिद्रोत्थाय [6]कक्षे वह्निरिव त्व मा स्वकक्षे कंक्षे इति कथमिह अकक्षे त्व जाल्म! इत्थमुक्त्वा तन्मुखे धूलिं प्राक्षिपत्। तेन च स मानुषोऽपि मङ्क्षु तदानीमेव महिष समपद्यत। स्मृतिस्त्वस्य तद्भावेऽपि न व्यलुपदिति तथाभूत तमिमस न्निभेषु सैरिभषु निक्षिप्य दुष्टा सा महिषपालकेन तेन निर्घृण ताडयन्ती एकस्य महिषार्थिनो हस्ते तिर्यक्त्वविवशीकृत त व्यक्रैषीत्। तत्क्रेता च तत्पीठसमारोपितभार महिषत्वमापन्न वामदेव गङ्गातीरे वर्तमान कञ्चिद् ग्राममानैषीत्। तत्र शङ्कुना बद्ध स पूर्ववृत्त सर्वम् अध्यगात्[?] येन च 'दुर्वृत्ता भार्या कक्षान्तरप्रविष्टा पुत्राँदिनी[?] सर्पिणीव न कस्यापि कल्याणाय' इति चिन्तयन्त सुदु खितमुद्व्याप्य भारक्लेशास्थिपञ्जरशेषशरीरं त काचिद् योगिनी [?]अभ्याचष्ट स्वालौकिकज्ञानाव गताखिलवृत्तान्ता च मन्त्रतोयेनाशु तस्य महिषत्वम् अह्लोष्ट[?]। प्राप्तमानुषरूपञ्च त स्वगृह नीत्वा तस्मै कान्तिमतीनाम्नीं निजदुहितरम् अरासीन्। एव पुनराप्तमानुषरूप समुपलब्धनवीनभार्यश्च स वामदत्त· ससुख कतिपयान्यहानि तत्रैव तस्थौ।

व्यतियत्सु[13] चाहस्सु निजगृहगमनोद्यत वामदेव दृष्ट्वा सा योगिनीकृष्णरक्तगौरान् त्रिवर्णानपि सर्षपान् आदाय सर्वान् अयावीत[14]। अभिमन्त्रितांश्च तान् कृत्वा

१. वक्तेर्लङ्। २ पृची सम्पर्चने। ३. णिसि चुम्बने। ४. क्व गच्छत। ५. वश कान्तौ लङ प्रथमपुरुषैकवचनम्। ६ कक्षे, तृणेऽग्निरिव त्व स्वकक्षेस्व कीयप्रकोष्ठे, कक्षे शास्सि, इतोह अकक्षे प्रकोष्ठाद् बहि (तृणाभावे वा) त्व माम् हे जाल्म, कथम् अकक्षे कुत्सित शास्सि (नञो नलोपस्तिङि क्षेपे)। ७, ८ कश गतिशासनयो। ९ इणवदिक इति वक्तव्यम्। १० तत्त्वकथने 'नादिन्याक्रोशे पुत्रस्य' इति निषेधाभावे पुत्रशब्दे तकारस्य द्वित्वम्। ११. चक्षि ङोऽत्रदर्शनार्थत्वाद् अदर्शदित्यर्थं। १२ ह्लुङ् अपनयने। १३. एते वातरि सुप्। १४. यु मिश्रणामिश्रणयो।

चनानामधेया कन्यामवाप। उत्पत्तिसमकालमेव च सा गगनोद्गतया गिरा भाविनो विद्याधरसार्वभौमचक्रवर्तिनो भाविनी भार्या निर्दिष्टा। तामेव माम् आर्यपुत्रो विदाङ्करोतु[1]। नाहमत्र भवते सर्वमेव विदुषे कथमपि द्विषे[2]। अतो मा मयि भवानपि सदेग्धु[3]। त्वय्यनुरक्तैव चाह त्वामहमिह समानैषम्।

एवमाख्याता मञ्जुला सा स्वात्मविषयिणीं नरवाहनदत्तीयसन्देहशङ्कां पर्यमार्ट्[4] इति विद्याधरीं तां भार्यारूपेण स्वीकृत्य स तदीयाभिलाषं क्षिप्रम् अप्रासीत्[5]।

[ इत्यदादय ]

एकदा च क्रीडाकुसुमावचयनक्रमेण सा ललितलोचना मलयपर्वतीयवनराजिषु किञ्चिद् दूरम् अजिहीत[6]। इतो नरवाहनदत्तोऽपि तया अविवेक्[7]। एवम्भूते व्यति-

**नरवाहनदत्तस्य प्रियापार्श्वक्यम् ( जुहोत्यादय )**

करे स वासन्तिकशोभासम्पन्ने कुसुमिततरुसुभगे गहने वने विहरन्नेक महदच्छजलं तीरतरुपरिच्युतकुसुमं सतारकम् आकाशमिव विराजमानमपश्यत्। तद्दर्शन-समकालमेव विचारोऽयं तन्मनसि आवर्वर्त[8] यत्पुष्पाणि अवचिन्वाना मदीया प्रिया न यावत् इह अभ्याजिहीते तावद् अहमिहैव तां प्रतीक्षमाणः काले पिपर्त्राणि[9] एतस्मिन्नेव सरसि नेनिजानि[10], वस्त्रान्तराणि च बिभराणि[11]। एवं सञ्चिन्त्य स तस्मिन्नेव सरसि, विविक्ते अनेनिक्त विहितदैनिकसन्ध्योपासनादिश्च तत्रैकस्मिंस्तरुतले तिष्ठन् राजहंसीनां तत्सदृशीं गतिं रसालवल्लीषु च तदालापसन्निभं पिकीनामालापम्, हरिणीनाञ्च तन्नेत्राभे नेत्रे विलोक्य दूरस्थामपि स्वप्रियां मदनमञ्चुकां स्मरन्नुद्भूतकामाग्निसन्तप्त तत्क्षणमेव मुमूर्च्छ। तस्मिन्नेव च काले पिशङ्गजटो नाम दिव्यदृष्टि कश्चिन्मुनि

---

१ विद ज्ञाने ( विदाङ्कुर्वन्त्वित्यन्यतरस्याम् )। २ द्विष अप्रीतौ। ३ दिह उपचये। ४ मृजू शुद्धौ, लङ् प्रथमपुरुषैकवचनम् ( मृजेर्वृद्धि ) ( व्रश्चभ्रस्जसृजमृज० ) इत्यादिना ष। ५ प्रा पूरणे। [ इत्यदादय ]

॥ जुहोत्यादय ॥

६ ओहाङ् गतौ, ( 'ई हल्यघो' )। ७ विजिर् पृथग्भावे, ( णिजा त्रयाणां गुण श्लौ )। ८ विष्लृ व्याप्तौ, ( शल इगुपधादनिट क्स )। ९ पॄ पालनपूरणयो ( अर्तिपिपर्त्योश्च )। १० णिजिर् शौचपोषणयो ( णिजा त्रयाणां गुण श्लौ ), ( नाभ्यस्तस्याचि पिति सार्वधातुके )। ११ डुभृञ् धारणपोषणयो ( भृञामित् )।

तत्र स्नातुमगादिति तदवस्थं स तमवलोक्य तत्प्रियास्पर्शतुल्यशीतलजलैः सिञ्चन् सदुःखं सावहितं, प्रगल्भ तमेवम् अभ्यधत्त, 'पुत्र, परीयन्ति प्रियाविरह-काले मनोरथाः' इति मा जुहुधि[3] तद्विरहवह्निमात्मयौवनशक्तिहविषा। जहि दैन्यद्विपदम्। मा च जहिहि, जहीहि, जहाहि[4] धैर्यम्। एवं हि तत्, धारिणे सर्वमभीष्टं ददाति[5]। धैर्यशालिनो हि व्याघ्रादयोऽपि बिभ्यति[6]। असिद्धिस्तु श्वशुरादिव तस्माज् जिह्रेति[7], इति मदाश्रमं चलित्वा एतत्सम्बद्धां मृगाङ्कदत्तीयां कथां समाकर्णय'। एतदुक्त्वा बाह्यान्तर्विशुद्धः पिशङ्गजटस्तं निजाश्रममानयत्। तत्र च फलमूलादिभि सम्पादितसमुचितातिथ्यं तं स्वयमुपभुक्तफलादिरित्थं ७मृगाङ्कदत्तीयां कथाम् अभ्यधात्[8]— [ इति जुहोत्यादय ]

अस्ति भुवनत्रयविश्रुता अयोध्या नाम नगरी। तस्याममरदत्ताख्यो मही-पतिर्विद्यते[9] स्म। भास्करस्येव तस्य राजवर्चसं त्रिभुवनेषु दिदीपे[10]। नित्यानु-रक्तायां सुरतप्रभायां भार्यायां तस्य मृगाङ्कदत्ताख्यः पुत्रो जज्ञे[11]। यौवनमापन्नस्य तस्य स्वदोर्दण्डस्येव कोष्ठिप्रासगुणान-

प्रियापार्थक्ये
( दिवादय )

तस्य प्रचण्डशक्ति-स्थूलबाहु-दृढमुष्टि-मेघबल-भीमपराक्रम-विक्रमकेसरि-विमलबुद्धि-व्याघ्रसेन-गुणाकर-विचित्रकथ नाम्नः कुलीना युवानः, शूराः, प्रभुहितैषिणः प्राज्ञाश्च मन्त्रिणो बभूवुः। मृगाङ्कदत्तश्च तैः सह समुदं पितुः प्रासादेषु निवसन्नात्मानुरूपां भार्यां लेभे।

एकदा रहसि तदन्यतमो मंत्री भीमपराक्रम स्वकीय स्वप्नमेवं वर्णितवान्—'देव, प्रासादेऽद्याहमशयिषीति स्वप्ने खरतरनखरमभिधावन्तं सिंहमेकमपश्यम्। गृहीतच्छुरिके समुत्थिते च मयि सोऽत्रस्यत्[12]' इति पलायमानं तमहं जवादनुपत्य

---

१. डुधाञ् धारणपोषणयोः, ( श्नाभ्यस्तयोरातः ), ( दधस्तथोश्च )। २. पॄ पालनपूरणयोः ( पॄतो वा )। ३. हु दानादनयोः, ( हुझल्भ्यो हेर्धिः )। ४. ओहाक् त्यागे, ( ई हल्यघोः ), ( जहातेश्च ), ( आ च हौ )। ५ डुदाञ् दाने। ६. ञिभी भये, ( आत्मनेपदेष्वनतः )। ७. ह्री लज्जायाम्। ८. डुधाञ् धारणपोषणयोः ( शानिस्थाधुपा० )— [ इति जुहोत्यादय ]

( दिवादयः ) ९. विद सत्तायाम्। १०. दीपी दीप्तौ। ११. जनी प्रादुर्भावे, ( गमहनजनखनघसां लोपः क्ङित्यनङि )। १२. त्रसी उद्वेगे।

---

७ इयं कथा दशमकल्लोले समाप्नोति।

व्यद्धु[1] प्रायसम्[2]। स च किञ्चिद्दूरं गत्वा प्रसारितरसनः [3]शूरितु माम् अगृधत्[4]। अतः छुरिकयाऽहं दीर्घां तस्य रसनामच्छेत्सम्। तदैव च स सिंहो विकृतो महानेकः पुरुषः समपद्यत। 'को भवान्' इति पृष्टश्च सोऽवोचत्, यदहं वैतालः, तव शौर्येण च निरतिशयम् अतुषम्[5]। कथय, किं ते प्रियमाचरेयमिति। एतदाकर्ण्याहममवं यदेव चेत्तदा मम प्रभोर्मृगाङ्कदत्तस्य का भार्या भाविनीति मामवबोधय। तच्चाकर्ण्य स वेतालोऽवशासीत् यत् उज्जयिन्यां कर्मसेननाम्नो नृपतेर्नि-जलावण्यन्यक्कृताप्सरस्सौन्दर्यशीलसम्पन्ना सुता शशाङ्कवती तद्भार्या भविष्यति, ताञ्चावाप्य सार्वभौमो भूपतिर्भूत्वा तव प्रभुः सर्वा निजप्रजाः सन्तोषयिष्यतीति। एवमुक्त्वा स वेतालस्तिरोऽधत्त अहञ्च स्वगृहमागमम्।

एतदाकर्ण्य मृगाङ्कदत्तोऽन्यानपि मन्त्रिणः समाहूय सर्वं तच्छ्रावयामास। स्वकीयञ्च स्वप्नमित्थं तेभ्योऽवर्णयत्—'जाने, सर्वे वयं महाटवीं प्रविष्टाः अध्वनि अतृषाम[6]। दुःखेन चावाप्तं पानीयं पेतुं[7] प्रवृत्ताः पञ्चभिः पुम्भिः सायुधैरवरुद्धाः। तान् हत्वा पिपासवो वयं यावत्पानीयं पातुं प्रयतामहे[8] तावन्न तज्जलं नापि ते पुमांस इति कृच्छ्रां दशामवाप्ता वयमिन्दुमौलेर्वृषभनादमाकर्ण्य महेश्वरमद्रा-महि। स च प्रगतेष्वस्मासु दक्षिणाद्दृशोऽश्रुणः कणमेकमपातयत्। स च क्षणा-नन्तरं समुद्रः समपादि[9]। तस्मात् प्राप्तां शुभामेकावलीं गले बद्ध्वा रक्तानुलिप्तेन नृकपालेनाहं तमम्बुधिम् [10]अपाये। तदनन्तरमेवाहम् [11]प्राभुत्सि। क्षणदाऽपि तदाऽदासत[12]।

मृगाङ्कदत्तेनेत्थं निजस्वप्ने निवदिते मन्त्री विमलबुद्धिर्हृष्यन्सु तत्रस्थान्वन्य-प्वभाषत यत्समवाप्तभवानुग्रहो भवान् धन्यः। स्वप्ने मुक्तावलीं लब्ध्वा यद्भव-ताम्बुधिः पीतस्तेन शशाङ्कवतीमवाप्य भवान् भुवं भोक्ष्यतीति स्थिरीकृतम्। तच्चाकर्ण्य मृगाङ्कदत्तस्तानुवाच यद् यथा मम स्वप्नस्य फलं यथा वा भीमपरा-क्रमो वेतालादाकर्णितवान् यद्यपि तत्तथैव भावि तथापि वल्गुणाभिमानिनः

---

१ व्यध ताडने। २ यसु प्रयत्ने ('यसोऽनुपसर्गात्')। ३ शूरी हिंसा स्तम्भनयोः। ४ गृधु अभिकाङ्क्षायाम्, ( पुषादिद्युतादि० )। ५ तुष प्रीतौ ( पुषादित्वादङ् )। ६ ञितृषा पिपासायाम्। ७ पीङ् पाने। ८ यती प्रयत्ने। ९. पद गतौ। १० पीङ् पाने। ११ बुध अवगमने। १२ दीङ् क्षये ( मीनातिमिनोतिदीङा ल्यपि च )।

नृत्यति। शैशवे धूलिधूसरितस्य यस्य रजसा मलिनीभूता अपि जना धन्यानात्मनो मन्यन्ते। यस्मिश्च पितुः सहस्रशो जीवनाशाबुद्बुदा आधीयन्ते, न चिरादेव विलीयन्ते ? संसारपातरभावपदार्थेषु किं जगति ह्यस्यैव प्राधान्यम्, गुणानाञ्च सर्वथोपसर्जनीभावः ? न च कर्मसु किमप्यप्रधानम् ? किं तथा स्निह्यत्यपि पितरि पुत्रस्य जनसामान्यप्रतिपत्तिर्न विशेषाग्रहः ? किमित्थं ह्यस्यमतिरिच्य गुणादिसमवाये मानवानामेकपदे एवाभाववुद्धिः ? किमेतदर्थमेव जनोऽन्योन्येन सृज्यते, रज्यति विरज्यते च ? अहो बत, यदनवाप्याधिपीडितोऽहमन्त प्रविष्टघुणं काष्ठमिवाहर्निशम् क्षीणतरम् सत्यपि सर्वस्मिन् विभवे सुतसुखावलोकनकामनया सुरतप्रभया सह तथाभूतानि व्रतादीनि समाचरम् तत्सर्वं विपरीतफलमिव मन्मनि। कथमन्यथा ममैवौरसो जातस्य मय्यवामिचारिकुबुद्धिर्भवेत्'। एवमित्यादि विविधं चिन्तयन् अतिगुप्यन्, कुप्यंश्च नृपतिर्निजपुत्रदौरात्म्यं क्षमितुं न अशकयत्, सेनापतिञ्च प्राविशत् यद्राज्यलुब्धो मम दुर्वृत्तः मृगाङ्कदत्तोऽमात्यैः सहितोऽद्यैव राज्यान्निवास्यताम्। सेनापतिरपि मृगाङ्कदत्ताय राजादेशं निवेद्य सामात्यं तं नगर्या निरकाल्यत्। राजपुत्रोऽपि जाचितविनायकोऽस्तिहृष्टो गृहीतापचितसम्पत्तिर्मनसैव पितरौ प्रणम्य विनिगम्य चायोध्यातः प्रचण्डशक्तिप्रमुखाश्चिनसहयोगिनो दशापि मन्त्रिणः उवाच यन्मदीयो बालसुहृत्, विद्यासु च सब्रह्मचारी, किराताधिपतिरिदानीं पितरि मृते पित्र्ये राज्येऽधिरोपितो वर्तते अतः सुहृदस्तस्यदानीं निकटं गच्छाम। तत समाद्य शशाङ्कवती मनुज्जयिनीं यास्याम इति।

एवं प्रतिपद्यामात्यैः सचिवैः सह गच्छन्मृगाङ्कदत्तः सायं निवृत्ततोयमरुवीथिकामवाप्य स्निग्धदुमात्रं कृच्छ्रात्तीरोपान्तप्ररूढशुष्कपादपं सरः एनमवालोकिष्ट। तत्र स्नात्वा सम्पादितसान्ध्यविधिः, पीतजलः, श्रान्तः शुष्कस्यैकस्य तरोरधोऽशयिष्ट येन तस्याध्वक्लान्तिः अलिंगत्।

१ नृती गात्रविक्षेपे। २ मनु अवबोधने। ३ धीङ् आधारे। ४ लीङ् श्लेषणे। ५ ष्णिह प्रीतौ। ६ सृज विसर्गे। ७ रञ्ज रागे। ८ जृष् वयोहानौ। ९ जनी प्रादुर्भावे ( जनिजन्योश्च )। १० गुप व्याकुलत्वे। ११ कुप क्रोधे। १२ क्षमू सहने। १३ शक विभाषितो मर्षणे। १४ विस प्रेरणे। १५ दुह निघासायाम्। १६ ष्विदा गात्रप्रक्षरणे। १७ लिश् अल्पीभावे।

इत्याश्रममिममुपगत्य स्वीकृतास्मद्वन्यफल्गु पाद्यातिथ्यास्तिथ्यामस्यामस्मान् सनाथीकुर्वन्तु । एवं तैरभ्यर्थितो मृगाङ्कदत्त सानुगस्तदाश्रमं गत्वा स्वीकृतधेनूपनीतविविधातिथ्यस्तत्र व्यतियापिततदिनं प्रातस्तस्मात्प्रस्थितोऽन्यान्यपि कौतुकानि विलोकयन् क्रमात् किरातविषयमवाप्य स्वागमावेदनाय किरातपतिं स्वमित्रं शक्तिरक्षितक प्रति श्रुतधिं प्राहिणोत् । सोऽपि च किरातेशोऽग्रे निर्गत्य सामात्यं मृगाङ्कदत्तमानतो निजपुरं प्रावेशयत् । तत्रापि च तेनोपचरितं कांश्चिद्दिवसान् स्थित स्वकार्ये सहायकरूपेण शक्तिरक्षितमपि सज्जं तं गृहीत्वाऽऽत्मना द्वादश पुण्याहे पुनरुज्जयिनीं प्रति शशाङ्कवतीहृतहृदय प्रातिष्ठत ।

गच्छंश्च शून्यामटवीमेकामवाप्य भस्मानिनज्टाभृत तपस्विनमेकं दृष्ट्वा किं त्वम् इहैकाकी निराश्रमपदेऽरण्ये तिष्ठसीति सानुगस्तमुपागत्य विनतोऽप्राक्षीत् । तापसश्च एतेनोदतरत् यदहं शुद्धकीर्त्यभिधानस्य नानामन्त्रौषधिसिद्धिमान् शिष्य । एकदा शुभलक्षण क्षत्रियकुमारकमेकमासाद्य स्वरथावेशमकरवम् । सोऽपि च समाविष्ट सिद्धौषधिरसखेत्राणि समुदीर्योवाच यदस्मादुत्तरदिग्विभागे विन्ध्याख्यामेकं केरल शिलापातरु विद्यते । तस्य चाधस्तान्महदेकं नागेन्द्रभवनम् । तत्र च पारावतास्य वत्स्याह्नाग । स चन्दा प्रवर्तमान देवासुरसंग्राममवृद्ध । अतस्तत्र गत्वा देवपक्षमाश्रित्य सन्नद्धवारवाणो देवभ्यो द्रुह्यद्भिरसुरै अयुद्ध । प्रलयघनघर्घरघोषेणेव च धनुषो नेकानरीन् योधनान् आयोधनान् निरास्यत् । अच्छौच च शरासनासितनिशितैः शरैरसुराणा शिरांसीति भूषिता सुरशत्रवो भूमियुक्तिं सोढुम् अतोम्यन्त इव दृढ ताम् आच्छिर्घ्नन् । तद्रागेणेव च क्षरदसृजा समरभू अकलैमीत् । एतेनातितृप्ता देवास्तस्मै वैदूर्यकान्तिनामकं खड्गमददु । तच्च खड्ग यो नरोऽवाप्नोति स सिद्धाधिपतिर्भूत्वाऽपराजितो दोर्व्यति । स चासिवीरसहायैरपम्भ्य । एवमाविष्टेन तेनोक्तेऽहं त व्यसर्जयम् । तस्य खड्गस्याभिगृध्नुश्चाहं साहाय्यार्थं सर्वां भूमिमिमं अभ्राम्यम् किन्त्वनवाप्तसहाय खिन्नो मर्तुमिहागात ।

१ युध सम्प्रहारे । २ असु क्षेपणे (अस्यतस्थुक्) । ३ छो छेदने (विभाषाघ्राधेट्शाच्छास) । ४ शो तनूकरण ('शाच्छोरन्यतरस्याम्') । ५ तमु काङ्क्षायाम् । ६ श्लिष् आलिङ्गने । ७ वृन्दू ग्लानिभाव । ८ दिवु क्रीडाविजिगीषा० । ९ भ्रमु अनवस्थाने (वा भ्राश० ) इति वैभाषिके श्यनि ( शमामष्टाना दीर्घं श्यनि )।

मृगाङ्कदत्त एवं तत्तापसादाकर्ण्य 'भगवन्, अलमति खेदेन! सभाग्योऽहं वेत्स्ये[1] तव सहाय इति सर्वमभीष्टं ते सेत्स्यति'[2] इत्थं तमभाषिष्ट। तापसश्चैत-दभिनन्द्य कृतकृत्यमिव तत्क्षणमेवात्मानम् अमंस्त[3]। सानुगेन तेन सह नागधाम च ययौ। तत्र मन्त्रबद्धासु दिक्षु च रात्रौ मृगाङ्कदत्तादीन् स्थापयित्वा दिक्षु विकीर्ण-रश्मिमन्त्रितसर्षपैरग्निं प्रज्वलीकृत्य नागदमनमन्त्रैर्होतुं प्राक्रंस्त[4]। उत्पातमेघाश्चागमन्नशन्याऽगर्जीत्। एवं कुर्वति सानुगे तस्मिंस्तापसे विद्याधरीवेश्या निरियाय। सा च स्वकीयाभरणरवैर्मोहयन्त्यात् पश्यन्तीवोपेत्य कटाक्षपात-मानमंतं विदधती समाश्लिक्षत्[5]। एतेन विस्मृतमन्त्रः स तापसो नितराम् अमुहत्[6] इति होमभाण्डं तस्य हस्तात् अपतत्। तदानीमेव लब्धावसरोऽसौ पारावताख्यो नागः कल्पान्तघनाघन इवोदगमत्। नयनज्वालाघोरं तमालोक्य तस्य दारुणं गर्जनञ्चाकर्ण्य सा दिव्या नारी तत्क्षणम् अनशत्। मुनिरिदमपश्यन्नपि चिराय अशाम्यत्[7]। तस्मिन् नष्टे नागो विहितसाहाय्येभ्यो मृगाङ्कदत्तादिभ्य अशप्सीत्[8] यद् यूयमस्य साहाय्यं निःसारणमनुष्ठितमुषितो[9] अतुर्विशि परिव्राज-कमन्योन्यवियुक्ता स्थास्यथेति।

एवमुक्त्वाऽन्तर्हिते नागे ते सर्वे तत्क्षणमेव ध्वान्तावच्छन्नदृशो व्यस्मयन्त। अथ तमसावृताः मृगाङ्कदत्ताद्या विप्रयुक्ताः शापप्रभावादितस्ततः क्षुभ्यन्तोऽन्यो-न्यान्[10] मृगयन्तश्च[11] नितराम् अखिद्यन्त[12]।

एवं सचिवैर्वियुक्तस्ततो भ्राम्यतो मृगाङ्कदत्तस्य द्वित्रेषु मासेषु व्यतीतेषु एकदा श्रुतधिर्विप्रस्तम् अन्विष्यन् अकस्मात्तदन्तिकमवाप। प्रदर्शितविनयश्च साधु श्रुतधिः सादरं स्वमन्त्रिणां वृत्तान्तं समाकर्ण्योवाच 'प्रभो, न यदा ते क्वापि क्वापि जाने, उज्जयिनीमेव ते यास्यन्ति, यतो हि सैव पुरी भवतो गन्तव्यास्पदम्।' एवमुक्तेन प्रेरितश्च मृगाङ्कदत्तस्तेन सहोज्जयिनीं प्रस्थितः क्रोशैरेव विश्रम-

1. विद् सत्तायाम्। 2. षिधु संराद्धौ। 3. मन ज्ञाने। 4. क्रमु पाद-विक्षेपे ('वा भ्राशभ्लाशभ्रमुक्रमु०') इति श्यन्विकल्पः श्यन् 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्, तेन 'क्रमः परस्मैपदेषु' इति दीर्घाभावः। 5. श्लिष् आलिङ्गने ('श्लिष आलिङ्गने')। 6. मुह वैचित्त्ये। 7. शमु उप-शमे। 8. शप आक्रोशे। 9. युज समवाये (मिलनेन इत्यर्थः) 10. क्षुभ सञ्चलने। 11. मृग अन्वेषणे ( दिवादेराकृतिगणत्वात् श्यन् )। 12. खिद् दैन्ये।

मार्गे विमलबुद्धिं निजमन्त्रिणमवाप्य अहृषम्¹। तद्दर्शनेन चोद्गात्पदश प्रणत त परिरभ्य तत्रैव चोपवेश्येतरमन्त्रिणां वार्तां पप्रच्छ। विमलबुद्धिरुत्ततार यद्देव, नाह बुध्ये² नागशापत कस्कस्तेपु क गत इति तथापि भवांस्तान् प्राप्स्यतीत्यह यथा वेद्मि तच्छृणु—नागशापेनेतस्तत परिभ्रमन्नहमटव्या पूर्वदिग्विभागेऽतिवलान्त केनापि साधुना महर्षेर्ब्रह्मदण्डिन आश्रम प्रापित। तत्र तेनर्षिणा प्रदत्ते फलै अम्भोभिश्च विगतक्लमीकृतोऽह पर्य्यटन्नाश्रमादाराद्वृहती गुहा-मद्राक्षम्। प्रविश्य च तत्र तस्या अन्तर्मणिमन्दिरमेकमवलोक्य जालगवाक्षैस्तत्र वीक्षितु प्रवृत्त सम्भ्रमक चक्र भ्रामयन्तीं स्त्रियं पृथक् पृथक् स्थितौ वृषगर्दभौ चाद्राक्षम्। भ्रमाश्च पार्श्वद्वयेन वृषगर्दभौ अधीयन्त³ इति ताभ्या स्रुतौ क्षीरा-सृक्फेनौ पीत्वा यथाश्रय ते सितासिता भूत्वा जालकारका अभूवन्। ततो द्विविधैश्च तै स्वकृतरक्तद्विविधा जालपाशा कृता, ते च सुपुर्वैर्विपु पैश्च सगता। तेषु जालपाशेषु यथासुख सक्तास्ते जालकारा श्वेतकृष्णोभयमुखेन महाहिना समागत्य दृष्टा इति नार्या तया ते नानाकेपु क्षिप्ता। समुत्थिताश्च ते तथर तान् पाशान् यथातथ क्लिष्ट्वा विषोद्वेगाच्च तत्पुरपालस्थेषु समारटसु अन्येऽपि तेऽन्य-जालस्था क्रन्दितु प्रवृत्ता इति तत्रस्थेन केनापि कृपालुना तपस्विना भालतो मुक्तया ज्वालया न्यधपाशास्ते ससुषिर वेदुम दण्ड प्रविश्य तदूर्ध्वस्थे भास्वरे ज्योतिषि न्यलीयन्त। तत्क्षणमेव च सचक्रवृषगर्दभा सा स्त्री चक्षुषोरगोचरताम् आपद्यत। तद् दृष्ट्वा विस्मितोऽह यावत्तत्र पर्यटन् स्थितस्तावद् भृङ्गगुम्फितैरम्बुने स्व वीक्षितुमाह्वयन्तीमिव पुष्करिणीं हृद्यामेकामपश्यम्। तत्तीरोपविष्टश्च यावदह तद्वन वीक्षे तावद्भुजप्रसैकेन स्वय सवर्द्धितो दशबाहु सिंहपोतोऽनायत्त इति मोधात्तस्माद्वनाद्विवासित। स सिंहपोतोऽपि च वनान्तरे सिंह्या शब्दमाकर्ण्य तत्र गच्छन् वायुनाऽवकीर्णभुजो निहित किन्तु क्षणानन्तर क्रमश स लब्धो दरेणैकेन पुसा पूर्ववत्समारोपितबाहुक सम्पादित इति स सिंह्या कृते तद्वन निगमिषुर्भृशम् अविक्लिश्यत⁵ तथापि अन्ते ता प्राप्य तद्युक्तो निजवनमायात इति सभार्यं त करिमर्दनमागतमालोक्य लुब्धकस्तस्मै तद्वन समर्प्य ततोऽगात्।

एतद् निरीक्ष्योभय तदाश्चर्यमहमाश्रममागत्य ब्रह्मदण्डिनेऽवोचम्। स चापि त्रिकालज्ञो मुनिर्मामेवमभ्यधात् 'धन्यस्त्वम्। सर्वमेतत्प्रसन्नेनेश्वरेण

१ हृष तुष्टौ। २ बुध अवगमने। ३ धीङ् आधारे। ४ ष्णुह उद्गिरणे ५ क्लिश उपतापे।

विमलबुद्धित एतत्सर्वमद्भुततममाकर्ण्य पर परितुष्टो मृगाङ्कदत्त श्रुतधियुक्तेन तेन सहापरमन्त्रिशशाङ्कवत्याप्याशापाशसितोऽपि स्वाभीष्ट सोढुम् प्रियापार्थक्ये नग्रेऽनवरत हिन्वन् नार्दुनोत्। अध्वक्लमापनोदार्थं गिरिप्र (स्वादय) स्रवणेषु सोऽसोष्टं। उदन्यार्दुतोऽपि स स्वनिश्चय न अधोष्ट। अशनायासम्बाधितोऽपि कदाचिरक्तिपयसिनसत्तुग्रासैरेवा मा नम् श्रतर्पीन्। अन्यदा चावचितवन्यफलैरेव स शान्तिम् आशिष्टं, शिष्टाभि निवशसन्निविष्टोऽसौ अवरिष्टं च शयनार्थं बाहूपधानोऽनास्तृतभूमिमेव यथा पूर्वम्। विमलबुद्धिसमुदितवाक्य स्मार स्मार स स्वाभीष्टसिद्धिं निरचेष्ट[2] इति काले काले सध्रीचो श्रुतधिविमलबुद्ध्यो प्रोत्साहनेन सोऽधिकाधिकमामो द्देश्याभिनिवशसुस्थिरत्वम् [5]आपत्। निराशा तत्सान्निध्यमपि समवलम्बितु न अशकीन्। अत एव च धृतिसाहसोद्यमधृक् सोऽनवरतश्रमेणापि न वष्टमोष्टं।
[ इतिस्वान्य ]

इत्थ शशाङ्कवतीप्राप्तिप्ररलाभिलापातितुन्नो[16] भवितव्यतानुनुन्नोऽसौ, वना द्वन पुराच पुर पुरन् अन्तरा नर्मदानदाम् [4]आससाद। सा चापि दिष्ट्या मिलितमेलियमाणामायशशाङ्कवतीक त वीक्ष्य निजवीचि प्रियापार्थक्ये वल्लुजलताभि, हर्षानृत्यन्तीव, विलम्बनैश्च त निकषा (तुदादय) कसन्तीव प्रतीयतेस्मेति तदाकृष्टो यावदेव स गाढमवगाढु तामवतरति तावत्तत्र खातु मायावटुनामा कश्चित्स्ववर भूपतिहर्षाच्छीन्। विधिरतर्कितमपि [7]वविधति इति पुन्वन्त त भिन्न त्रयो

स्वादय

१ षिञ् बन्धने २ साध ससिद्धौ ३ हि गता वृद्धौ च ४ दु दु उप ताप ५ पुञ् अभिषव ६ टु दु उपताप ('दुग्वोर्दीर्घश्च', इत्यत्र निरनुबन्ध कत्वात् दु गतावित्यस्यैव ग्रहणादत्र न दीर्घ) ७ धुञ् कम्पन ('स्वरतिसूति'- इति वेट्) ८ जलादिना पिण्डीकृत इत्यर्थ (सिनोतेर्ग्रासकर्मकर्तृकस्य) इति निष्ठानत्वम्। ९ तृप प्रीणने। १० अशू व्याप्तौ सघाते च। ११ वृञ् वरणे। १२ चिञ् चयने। १३ आप्लृ व्याप्तौ। १४ शक्लृ शक्तौ। १५ अशू व्याप्तौ सघाते च (उदित्वात् वेट्) १६ तुद व्यथने। १७ णुद प्रेरणे ('नुद- विदोन्द०' इति वैकल्पिको न) १८ पुर अग्रगमने। १९ षद्लृ विशरण गत्यवसादनेषु। २० कृन्द्ध गतीन्द्रियप्रलयमूर्तिभावेषु। २१ विध विधाने।

तत्कालोचितमुवाच यद् अविचार्यैवेव कथमतिताम्यति भवान्। अत्र तु निशापतिरेवापराध्यति येन नैषा निशा प्रकाशिता विधाता वा चुकोर्ट यो न पूर्वाधिकारमस्य भाग्ये लिलेख। अत एवेदस्यन्धकारेऽकारण वैराणि समुल्लसन्तीति दैवादत्र मिलितयोरावयोर्युद्धेन क्तर कि वेदिष्यते। नागरिकाटेतदाकर्ण्य सत्यमिति तुष्टो मृगाङ्कदत्त 'को भवान्', इति त पुरुष पप्रच्छ। तेन च चौरोऽहम् इत्युक्तो राजपुत्रो मृषावदत्, 'तर्हि हस्तमानय, सहचरश्च मे भवेति'। ऽथ तेन सत्य कृत्वा तेनैव सह गच्छन् स निर्जलजीर्णकूपमेकम् उपासीदत्। तच्च प्रविश्य तत्र वर्तमानया सुरङ्गया तेनैव पुसा च सह गत्वा स मायावटो राज्ञोऽन्त पुर प्रविवेश। तत्र प्रकाशे स पर्यचैषीद् यत्तस्य सहायायी पुरुषो नान्यस्तम्करोऽपि तु चण्डकेतु प्रतीहार। राजस्त्रीच्छद्मकामुकश्चण्डकेतुस्तु मन्दालोकेककोणस्थ मृगाङ्कदत्त परिचेतु नाशक्त्।

तत्र प्रासमेव च प्रतीहारमुत्थाय मधुमत्यभिधाना तदनुरक्ता राजपत्नी त कण्ठेऽग्रहीत् पर्यङ्के समुपवेश्य चाप्राक्षीत्, 'अद्य क पुमास त्वमिहानैषी' इति। प्रतीहारोऽब्रवीत्, 'विश्वसिहि ममाय सुहृदिति न भयस्यावकाश' इति। एवमुक्ता मधुमती सातिशयम् उद्विग्निष्ट, उवाच च यदिदानीं मन्दभाग्याया मे कुतो विश्वास, यतो हि नर्मदाम्भसि मृत्युमुखे पतित राजानमवलोक्य मृगाङ्कदत्तस्तत्क्षणे व्यापृतं इति राजाऽसौ जलमानुपगृहीतोऽपि नामृत। तच्छ्रुत्वोपांशु प्रतीहारोऽब्रवीत्, 'प्रिये शुचा अलम्। अचिरादेव मृगाङ्कदत्त तमहम् प्रतिस्किरिष्यामि' इति। एतदुक्तवन्त त मधुमत्यभ्यधत्त—'मा विक्थिष्ठा, यदासौ नृपो नर्मदाम्भसि ग्राहैराक्रान्तोऽभूत्तदैको मृगाङ्कदत्त एव तत्रक्षणाय समयस्यत्, तमनस्यच्च। कथ न त्व तं तत्रैव तर्हि तर्हितुमभङ्गुर शस्त्रम् उदगुरिष्ठा अपि तु भीतस्तत पलायिष्ठा? वीरा हि कर्मणि निपुणन्ति न केवल वार्चाति जोपमास्यताम्। मा कस्यचिच्छ्रुतिपथमेतदवतरेदन्यथा मृगाङ्कदत्तात्सूराच्छित्र ते न भवेत्।

---

१ कुट कौटिल्ये। २ लिख अक्षर विन्यासे। ३ विद्लृ लाभे। ४ विश प्रवेशने। ५ ओविजी भयचलनयो। ६ पृङ् व्यायामे। ७ मृङ प्राण त्यागे। ८ गुरी उद्यमने। ९ पुण कर्मणि शुभे।

कस्मिन् शालमलिपादपे निखाता गणेशप्रतिमामालोक्य कृततत्परिणूति[1] तन्मूले परिश्रान्त समुपाविशम् । कृतञ्च मनसि, यद् वेतालवृत्तान्त स्वामिने निवेद्य न मयोचितमाचरितम् । एव पारस्परिक्पार्थक्येऽपराधिनमात्मानमालोच्य निराहारो देवस्याग्रेऽध्रुव देहमिम परित्यक्तुमध्रुवम्[2] । गतासु चैवमवहुतिथीषु तिथिषु तेनैव पथा कश्चिपथिकोऽपथीत् तस्यैव तरोश्छायायाम् च क्षण विश्रम्य 'किं त्व पुत्रात्र म्लानमुखस्तिष्ठसि ? किमिच्छति[3] भवान् ? किं मिच्छति भवन्तम् ? इत्थ निरवक्षात् । तन्निर्वन्धेन च यथावत्स्ववृत्तान्त निनिवेदितवन्त मा स वृद्धपथिक 'न धीरेषु भवादृशेषु एवमामग्लानिहेतुभूतविकारा शुम्भन्ति । धीरोद्योगिना हि सर्वे मनोरथा यथासमय सम्भुम्भन्ति[6] इति नापदि ते स्वधैर्यम् उज्झन्ति ।' एवमुक्त्वा तन्नोधिका विविधा कथाश्च कथयित्वा मरणान्मा निवार्य यथच्छम् अविच्छायीत्[7] । [ इति तुदादय ]

मित्रवियोगतन्मतामिस्रावरुद्धबुद्धि किन्तु, सुगृहीतस्नेहोपदेशप्रदापोऽप्यव खिन्त यत्सर्वमुपदेश्य विद्वानपि न स कृत्याकृत्य विन्ते[8] । ज्ञानप्रकाशो हि न तस्य संमुच्छृन्ते इति प्रियाप्रियतरमपि स [11]परिवृन्ते । अत कथ मा विधिर्मम प्रभुणा सयुनक्तु[12] येन स पुनरप्यस्मान् पूर्ववत् सम्भुनक्तु[13] इति चिन्तानिमग्नोऽह युष्मान् अनिव्यञ्चन्त्या स्तवाभिलषितासुजयिनीम् [14]आश्विषम् । पर सापि म तव सयोगम् अवर्जीत्[15] । एतच्च नैराश्य स्वान्त मदीयम् अभिनत्[16] इव, शरीरञ्च प्राणेभ्य अविनक्[17] इवेति भवदनवाप्त्यवर्द्धमानसगतिरतिश्रान्त एकस्या स्त्रिय गृह प्रदत्तभोजनावासवस्त्रोऽह वासाय प्राविशम् । तत्र चावाप्तशयनासन क्षण

प्रियापार्थक्ये
( रुधादय )

१ णू स्तवने । २ ध्रु गतिस्थैर्ययो । ३ 'मान्तप्रकृतिकसुवन्तादयाच्च क्यच् न' इति क्मिम् शब्दात् क्यचो निषेध । ४ मिच्छ उत्क्लेशे । ५ शुम्भ शोभार्थे । ६ उम्भ पूरणे । ७ विच्छ गतौ ( 'गुपूधूपविच्छ०' इत्यायप्रत्यय )

( इति तुदादय )

❀ रुधादय तनादयश्च ❀

८ खिद् दैन्ये । ९ विद विचारणे । १० उच्छृदिर दीप्तिदेवनयो । ११ उत्तृदिर हिंसानादरयो । १२ युजिर योगे । १३ भुज पालने । १४ अञ्जू व्यक्तिम्रक्षण । १५ वृजी वर्जने । १६ भिदिर विदारणे । १७ विचिर पृथग्भावे । १८ रुधिर आवरणे ।

ऽमानमपश्यम्। तत कतिचिद्दिनानि इतस्ततोऽप्युद्विग्नोऽहमभ्रमिपम् इत्येकस्मिन् दिने शौनिक एको जीवन्त माम् अग्रहीत् भिल्लराजप्रतीहारमुपयायास्मै चण्डकेतवे च समुपाहापात्। तत्पत्नी मामवलोक्य अपूर्वोऽय मयूर इति चिप्रम् अप्रैषीत। मदुपयुक्तेन च स्वादीयसा भोज्येन प्रोषित माम् अप्रीणीन्, मनोरञ्जकक्रीडनकरूपेण चैकस्मिन् सुन्दरे पञ्जरे समतिष्ठिपत्।

अद्येह दैवानीतस्त्व मम कण्ठसूत्रकममुच इति पुन समयो नौ अक्षीणात् अतो न चिरादस्मान् निर्झ्रणीयाव। रात्रिचर्याया दर्शकान् पापोऽय प्रतीहार स्वरहस्यभेदभिया प्रमीणाति त्वञ्चास्य रात्रिचर्यामद्यादर्श इति सर्वमस्याचरणरहस्य जानासि। अतो योगिनीनिमितमेतत्सूत्र स्वकण्ठे सिनीहि मयूरीभूय चामुना गवाक्षेण बहिर्निर्झ्रणीहि। तत समुच्छ्रितात्तव कण्ठात् प्रसारितभुजोऽह तत्सूत्र मोचयित्वा आत्मन कण्ठे भन्त्स्यामि तद्वदेवाहमपि च द्रुतमनुद्रोष्यामि तत्र च त्वया मम सूत्रे मुक्ते आवा प्रकृतिस्थौ भविष्याव। द्वार हि बहिर्गलितमिति ततो निर्गममावयो विष्कम्भ्नाति अतो गवाक्षमार्गेणैवावयोर्गमन श्रेय।

चतुरस्य भीमपराक्रमस्य युक्तिरिय राजपुत्र निरतिशयम् अप्राणात् इति तत्कथनानुसारेण स ततो निर्गत्य मन्त्रिणा सह सचिवद्वय स्वावासमागात्। तत्र च प्रहृष्टास्ते सर्वेऽन्योन्यवृत्तान्तवर्णनैस्ता निशामनेषु।

प्रात मायावटुभिल्लराजो निजप्रतीहारेण चण्डकेतुना सह मृगाङ्कदत्तमुपाव्राजीत्। राजपुत्र विनोदयन् 'एहि, अक्षैर्दीव्याम' इति चावादीत्। एतच्छ्रुत्वा मृगाङ्कदत्तस्य सखा श्रुतधिरभाषिष्ट, 'किमक्षदेवनेन! न तत्किमप्यपूर्वम्, किं विस्मृत भवता यद् ह्य भवत्प्रतीहारोऽपूर्वस्य मयूरस्य नृत्यप्रदर्शन प्रत्यजानात। अतस्तेनैवाधुना मनो रञ्जनीयम्।' श्रुतधरेतदाकर्ण्य शबरेश्वरो मयूरानयनाय त प्रतीहारमादिक्षत्। प्रतीहारश्च तदानीमचिन्तयत् यस्मिन्नर्थमह प्रमादाद्विस्मृत्य शिखिरयचिसमपि सपारहस्यसाचिण न तत्क्षणमचर्णिपम्।

---

१ ग्रह उपादाने। २. प्रीञ् तर्पणे कान्तौ च। ३ ष्टुप स्नेहनसवनपूरणषु। ४ स्वच भूतप्रादुर्भावे। ५. ऋ गतौ। ६ मान् हिंसायाम् ('हिनुमीना')। ७ ज्ञा अवबोधने ('ज्ञाजनोर्जा')। ८ षिञ् बन्धने। ९ ऋ गतौ। १० स्कम्भु रोधने सौत्रो धातु। 'स्तम्भुस्तुम्भुस्कम्भु०',-'वे स्कभ्नातेर्नित्यम्। ११ चणु हिंसायाम्, व्यापादयमित्यर्थ (ह्मयन्तेति वृद्ध्यभाव)।

तच्चैवमवलोक्य त्वद्वियोगिनोऽतिदुःखितस्य च मे मतिरात्मोपहारेण देवीं सन्तोषयितुमुदभूदिति यावदहं धावित्वा तत्खड्गमुपात्तवाँस्तावद् वार्धक्यकम्पिना शिरसा सानुकम्पं कापि तापसी मरणान्मां निवार्य पृष्टमद्वृत्तान्तोक्तवती 'सुखदुःखसंयोगवियोगादिपरिपूर्णेऽस्मिन् जगति वीरस्य ते देहोत्सिसृक्षयाऽनयाऽलम्। मृतानामपि समागमो भवति किं पुनर्जीवितानामिति मृगाङ्कदत्तेनावश्यं ते समागमो भवितेति। इत्थं वृद्धतापस्याऽऽश्वासितोऽहं समुपजाततद्वाक्यास्थो विहिततत्प्रणतिः प्रस्थितवान्। ततः क्रमादटवीमेतां प्राप्तश्चण्डिकाकृते उपहारमन्विष्यद्भिरेभिः शबरैरुपलब्धोऽस्मीति युद्धे व्रणादितः शबराधिपतेरस्य मायावटोः पार्श्वमानीतोऽत्र ह्वित्रमन्त्रियुक्तं भवन्तमुपलब्धवान्। अत्र च त्वत्प्राप्तिप्रसादः सर्वं मदीयं दुःखमिदानीम् औनत्[1]।

सत्या गुणाकरेणेत्थमुदारितं तद् वृत्तान्तमाकर्ण्य शबरेशगृहस्थितो मृगाङ्कदत्तः परमं पर्यप्रीणयत्[2] वयस्यैरन्यैरुत्थाय निजाह्निकं च अतितीरत्[3]। गुणाकरमथ तत्रोल्लाघयन्, शेषान् सखीन् प्राप्तुमुज्जयिनीञ्च शशाङ्कवत्युपलब्धये यियासुः कतिचिदहानि तत्रैव अवसत्[4]।

गुणाकरे चाथोल्लाघतां गते, शुभेऽहनि मृगाङ्कदत्तः श्रुतधिना, विमलबुद्धिना, गुणाकरेण, भीमपराक्रमेण च सहितोऽन्यान् सखीन् चपेयन्[5] शशाङ्कवत्युपलब्धये उज्जयिनीं प्रति पन्थयमानो[6] निजसुहृदं शबराधिपं मायावटुमामन्त्र्य तत्पल्लीम् अरहत्[7]। गच्छँश्चाग्रे सामन्यः स क्वापि तरोस्तले निद्रितोऽकस्मात्प्रबुद्धः पुरः सुप्तमानुषमेकमविक्ष्यत्[8]। यावच्च स तस्य मुखं निरावृणोति तावत्स विचित्रकथसञ्ज्ञकं निजमन्त्रिणमभिज्ञातवान्। सोऽपि च विचित्रकथः प्रबुद्धः सन् मृगाङ्कदत्तपादयोरग्रहीष्ट। अकाण्डदर्शनो फुल्लचक्षुर्मृगाङ्कदत्तोऽपि च तं प्रबुद्धं स्वमन्त्रिभिः सह असभाजत[9]। अथाखिलेषु क्रमात् उक्तस्वस्ववृत्तान्तेषु मौनमाकलयत्सु विचित्रकथोऽप्यात्मवृत्तान्तं सप्रपञ्चम् अपप्रथत्[10]।

इत्थं श्रुतधिपञ्चमैः स्वसचिवैर्युक्तो मृगाङ्कदत्तोऽगणिताध्वश्रमो, विन्ध्याटव्या भुवि गच्छन्नच्छाच्छस्वादुशीतलजलाशयं सफलस्निग्धतरच्छायरमणीयं काननमेकं

1 ऊन परिहाणे। 2 प्रीञ् तर्पणे ('धूञ् प्रीञोर्नुग् वक्तव्य')। 3 तीर कर्मसमाप्तौ। 4 वस निवासे। 5 चिञ् चयने ('चिस्फुरोर्णौ', 'अतिह्री०-' 'मितां ह्रस्वः')। 6 पथि गतौ। 7 रह त्यागे। 8 विक्ष दर्शने। 9 सभाज प्रीतिदर्शनयोः। 10 पथि विस्तारवचने।

मापत्। तत्र ससचिव सोऽशुशुन्धन् फलानि च अबभक्षत् समाच्छन्ने चकस्मिन् प्रदेशे विश्रामार्थमतिष्ठत्। एतस्मिन्नेव समये स नातिदूरे तस्मात्स्थानात्समाला-पमिवाश्रौषीत्। तत्र गत्वा च स यावल्लतान्तरे चक्षुर्निक्षिपति तावत्तत्र महान्त वरवारणमेकम् अवालुलोकत्। स च पथि श्रान्त चक्षुरहित पुरुषमेक करेणाहृतै-स्तोयै, फलै, स्वर्णानिलैश्च 'कच्चिदाश्वसितो भवान्'? इति मुहुर्मुहु साधुमानु-षयान्या व्यक्तया गिरा समाश्वासयन् मृगाङ्कदत्तम् अचुकुहत। एतेनाश्चर्य चकितो राजपुत्र स्वसखान् आह, 'पश्यत, क्व वन्यो वारण, क्व च मानुषोचिता चारा। तदवश्यमत्र केनापि हेतुना भवितव्यम्। अय पुमान् अस्माक सहाय प्रचण्डशक्ति तुल्यति किमन्धोऽयमिति विशिनष्टि। अत क्षिप्र तत्र गत्वा पश्याम इति सखीनुक्त्वा प्रच्छन्नलक्षितस्तस्थौ। तत्र समाश्वसित तमन्ध वार-णोऽपृच्छत् 'भगवन्, कस्त्वम्? कथञ्चेहायात? कथ वा दृष्टमुपयात?' तत सोऽन्धोऽपि गजोत्तम तमित्थम् उदतीतरत् 'अहमायोध्यिन्स्य राज्ञोऽमरदत्तस्य पुत्रस्य मृगाङ्कदत्तस्य प्रचण्डशक्तिनामा भृत्य। त राजपुत्र केनापि कारणेन भूपती राज्ये वस्तुम् अवाजूवन् इति सहायैरस्माभिर्दशभि सहित शशाङ्कवती-हृतोरभ्युज्जयिनि प्रस्थित। मार्गे च नागशापेन सर्वे वय वियोजिता। अतस्त च्छापेन भ्रमन्नहमन्ध वमायातो यथोपलब्धफलमूलाशन कुर्वाणो मार्गे नाना क्लेशान् अन्वबीभवम् तेनातिखिन्न पर्वतपतनानशनादिनेष्टतममृत्युमन्विच्छन्न हमामीया न काममपि दानिम् अवीशोशिषम्। तथापि तथाकुर्वन्त मामवलोक्य विधिर्भृशम् अचुकुंस्मन इति न त मह्य व्यशिश्रणत। अद्य हि त्वत्प्रसादेन मदीय सर्वं चुन्दु खम् अचकेल्त इत्याम्ब्यमपि कदाचिन्मे जम्भयेत[13]।

तेनेत्थमुदीरितो हर्षशोकयोर्दोलायमानमानसोऽपीदानीं सजातनिश्चयो मृगा ङ्कदत्त सचिवानभापत, निश्चयेनैता कष्टदशा गमित प्रचण्डशक्तिरेवायम् इत्य-धुनास्मानिरत्वरया सम्भावनाय। नेत्रदानोपकारश्च कश्चिदस्यैव द्विप

---

१ शुन्ध शोचकर्मणि। २ भक्ष अदने। ३ लोकृ दर्शने। ४ कुह विस्मापने। ५ अट्टन्तस्य तुलाशब्दस्य 'तत्करोतीति'—णिचि रूपम्। ६ तॄ प्लवनसन्तरणयो। ७ वृजी वर्जने (आधृषीयत्वाद्वैकल्पिको णिच्)। ८. भू सत्तायाम्। ९ शिष असर्वोपयोगे। १० कुस्म कुत्सितस्मयने। ११ श्रण दाने। १२ कल गतौ। १३ जभि नाशने।

कुर्यात्' । एवमुक्त्वा राजपुत्रं शृण्वंस्तत्रालक्षितोऽतिष्ठत् । प्रचण्डशक्तिस्ततो वारणं तमपृच्छत् 'महात्मन्, को भवान् ? कथं वा ते गजत्वम् ? कथं च समदस्यापि ते निर्मदा वागेषेति ?' एतदाकर्ण्य सनिःश्वासमामूलात्स्वकीयं वृत्तान्तं वर्णयितुं गजो जगाद–

'पुरा एकल्यायां नगर्यां श्रुतधराभिधो राजाऽभूत् । सिंहासनमारोहति च यस्मिन्, यस्य शक्तिं, षाड्गुण्यं, त्रिवर्गं चारातयोऽपि अचीकृतन्[1] (अचिकीर्तन्) समुदिते च यस्य तेजोविभाकरे भीतिचाकचिक्याभिभूतानि विपक्षिचक्षूंषि अचीकणन्[2], दुर्हृत्कुमुदानि च अचचन्त्रन्[3]। यः प्रजासु सर्वथाऽनाश्रितान् अपपक्षत्[4]। अधर्मम् अदूदुलत्[5]। चौर्यम् उदमूमुलत्[6]। शौर्यम् अपपर्णत्[7]। वध्यम् अबोर्बधत्[8], प्रजाभ्यश्चेच्च सर्वथा सुखसौविध्यम् अबीभजत्[9]।

तस्य चैवंभूतस्य धर्मध्वजस्य, राजनीतिपरायणस्य च राज्ञो द्वयोर्भार्ययोः शीलधरसत्यधरनामानौ द्वौ सुतावजनिषाताम् । शीलधरस्तयोर्ज्येष्ठः सत्यधरश्च कनिष्ठः । कनीयांस्तयोः यौवनमदोसिक्त एवम् अजगर्वत[10] यत्सोऽर्हानपि अजगर्हत्[11]। न देवान् किञ्चिद् अजीगणत्[12], न दीनेभ्यः पणमपि व्यशिश्रणत्[13]। दायादैरन्यैः सह तद्व्यवहारः खाल्प्यात् दिवं याते एव भूपतौ स स्वौरसं ज्यायांसञ्च शीलधरमपि राज्याद् व्यौचिच्छत्[14]।

अमर्षेण चैतेनातिसमुद्विग्नः शीलधरो वनं गत्वा घोरेण तपसा सन्तोषितं शिवं वरार्थम् प्रार्थयत[15] यदहं गन्धर्वो भवेयं येनाम्बरचरो भूत्वा दायादं सत्यधरमवहेलया हिंसयेयम्[16]। एतदाकर्ण्य शम्भुस्तमादिदेश यदत्ते भावि किन्तु शत्रुस्ते स्वयं मृत इति स राढायां पुरि भूपतेरमरभटस्य समरभटो नाम पुत्रो भूत्वा जनिष्यते । तस्य च त्वं भीमभर्गो नाम विमातृजोऽग्रजो भूत्वा तं निहत्य

---

१ कृत् संशब्दने ('उपधायाश्च') । २ कण निमीलने । ३ चन्द्रि संकोचने । ४ पक्ष परिग्रहे । ५ दुल उत्क्षेपे । ६ मूल रोहणे । ७ पर्ण हरितभावे । ८ बध संयमने । ९ भज विश्राणने । १० गर्व माने (आगर्वीयाद्वात्मनेपदम्) । ११ गर्ह विनिन्दने (आधृषीय) । १२ गण संख्याने (ई च गणः) । १३ श्रण दाने (प्रायेणायं विपूर्वः) । १४ उच्छी विवासे । १५ अर्थ उपयाच्ञायाम् (आगर्वीयत्वाच्चिच्य तङ्) । १६ हिसि हिंसायाम् (आधृषीय) ।

राज्य कारयिष्यसि किन्तु यतो हि त्व सामर्षम् अतपसी इति मुनिशापात्पद भ्रष्टो जातिस्मरो व्यक्तवाग् वन्यो वारणो भविष्यसीति। यदा च त्वमवसन्नमतिथिं स्ववृत्तान्त सूचयिष्यसि तदा गजत्वान्निर्मुक्तो गन्धर्वो भविष्यसि। अतिथिरपि च त्वया तदोपकृत सम्पत्स्यते। एवमादिश्य तिरोभूत भव शीलधरश्चिरतप क्षीणा स्वतनु विभाव्य गङ्गाया ताम् पातयति स्म।

अत्रान्तरे पूर्वोक्तायोग्रभटसज्ञाय राज्ञे मनोरमया मनोरमाख्यया पत्न्या ससुख निवसते देशान्तराल्लासको नाम नर्तक समागत्य यत्र स्त्रीरूपिणा हरिणा दैत्यानाममृत हृत तन्नाट्यप्रयोग प्रादर्शयत। तस्मिश्च नृत्यन्तीं नर्तकस्य तनया लास्यवतीं नृपोऽवलोक्य स्वरूपविक्षोभितविश्वे, विश्वे तद्रूप अलूलुभत् इति नृत्यान्ते प्रवितीर्णतत्पितृप्रचुरधनस्तत्कालमेव स कन्या स्वकीयमन्त पुर प्रावीविशत। विहितोद्वाहया च तत्र तया मर्तक्या लास्यवत्या तन्मुखासक्तलोचनस्तस्थौ।

एकदा सा यजु स्वामिसज्ञ पुरोहितम् अर्चयन् यत्पुत्रो मे नास्तीति पुत्रे ष्टया त्व मामत्र सत्रयस्व। तदाकर्ण्य पूर्वाराधित पुरोहितस्तथेति प्रतिज्ञाय विद्व द्विप्राह्मणैर्विधिवत्तामिष्टिम् अचीकरत् मन्त्रपूत चरुञ्च द्विधा विभाजयन् अन्य भाग ज्येष्ठाम्, शेषञ्च लास्यवत्यै प्राशयत्। ततश्चोभयो राज्ञ्योरुदरयो पूर्वोक्त शीलधर-सत्यधरनामानौ पुत्रौ समानम्मतुरिति समय प्राप्ते महीपते पाणिगृही ती भार्या मनोरमा कल्याणलक्षण पुत्र प्रासविष्ट। तत्प्रसवकाले च दिव सुस्पष्टा भारती समुदभूद् यदय भीमभटो नाम विख्यातकीर्तिर्नृपोऽभवतेति।

अन्यद्युर्लास्यवती चापि सुतमसूतेति पिता त समरभटनामान कृत्वा सुतद्वयोत्सवसमारोहे प्राचुर्येण यथाविभवम् अविव्ययत। यथासमयकृतयथा वश्यक्संस्कारौ महार्हदोलयोरान्दोल्यमानौ लाड्यमानौ पाल्यमानौ च तावुभावपि समधिकसौकुमार्यौ कुमारौ कौमारे कुमारयमाणौ राजप्रासादेषु अवधिषाताम्।

---

१ कृधातो स्वार्थे णिच्। २ तपोऽचर इति विग्रहे 'कर्मणो रोमन्थ तपोभ्या वर्तिचरो' इति क्यङि (तपस परस्मैपदञ्च) (क्यस्य विभाषा)। ३ सूच पैशुन्ये। ४ पत गतौ (वैभाषिकणिजन्त)। ५ लुभ विमोहने। ६ विश प्रवेशने। ७ कथ वाक्यप्रबन्धे। ८ सत्र सन्तानक्रियायाम्। ९ डुकृञ करणे। १० भाज पृथक्कर्मणि। ११ अश भोजने। १२ व्यय वित्तसमुत्सर्गे। १३ कुमार क्रीडायाम्।

भीमभटश्च निसर्गतः शरीरेण किञ्चिद् अशश्रथत्[1] समरभटश्च अतुस्थूलत्[2], तथापि स्फूर्त्या, शीलशौर्यवीरगुणैश्च भीमभटः समरभटमजयदिति सद्दर्पेणान्योन्ययोस्तयोर्वैरमवर्धिष्ट ।

एकदा बाहुयुद्धक्रीडायां समत्सरो हठात्समरभटो भीमभटं मुष्टया अतीतडत्[3]। एतेन भीमभटः सातिशयम् अबभामत्[4] भुजाभ्यां भ्रातरमुत्क्षिप्य च क्षितौ अचिक्षिपत्[5]। तेनेत्थं गाढमभिहतं समरभटं सर्वद्वारैरसृग्वमन्तं सेवका मातुरन्तिकमानिन्युः। माता च तं तथाभूतं दृष्ट्वाऽवबुद्धसर्ववृत्तान्ता, नितान्ताशान्तस्वान्ता, स्नेहकातरा, तन्मूर्द्धासक्तमूर्द्धा भृशं प्रारुदत् तदैवात्याकुलचेतसा तत्र प्रविष्टेन राज्ञा किमेतदिति पृष्टा चोवाच तवात्मजस्यैतां दशां समवलोक्याहं विचारयामि यत्कथमेवंविधे सुते तवैव कल्याणं स्यात् इति। लास्यवत्यैवमुक्तस्य नृपस्योग्रभटस्य क्रोधाग्निरेवं समैन्धिष्ट यत्स भीमभटं हृतवृत्तिं कृत्वा समरभटस्य च रक्षार्थं सपरिच्छदं राजपुत्रशतं नियुज्य सर्वं भाण्डागारं कनीयसः समरभटस्याधीनं कृत्वा ज्यायांसं भीमभटं सर्वथाऽपासार्षीत्। एतत्सर्वमवलोक्य तन्माता मनोरमैकदा पुत्रमाहूय व्याहार्षीत् यत्कर्तरीरागानुरक्तस्ते पिता ज्येष्ठमपि त्वामेवमवाहेलयत् यत्सर्वं सुखसौविध्यं तुभ्यं पर्यवर्जीदिति समरभटोऽपि तुच्छातितुच्छं त्वां गणापयत्येवं व्यवहारोऽनयोरत्र न त्वदीयमुदर्कं सुखाकरं कथापयति। अतस्त्वं पाटलिपुत्रं गच्छ तत्रापुत्रको मातामहस्तुभ्यं स्वराज्यं दास्यति। इत्थं बलिनो रिपोः परोक्षस्त्वमेधि। मातुरेतद्वचः श्रुत्वा भीमभटो निजगाद यन्मातः, क्षत्रियः सन्नाहं क्लीब इव देशं रहयिष्यामि। मा च त्वं धैर्यमवधीरय। न कोऽपि वराको मां प्रबाधितुं शक्नोति। एवं ब्रुवन्तं तं माता अब्रवीत् तर्हि मदीयैर्धनैस्त्वं स्वरक्षार्थं भूयसः सहायान् कुरुष्व येन यथासमयं ते त्वद्रक्षार्थं संस्कुर्वन्तु। एतदाकर्ण्य भीमभटोऽवोचत्। अम्ब, नैतच्छोभते, एवं कृते तातस्य प्रातिपक्ष्यं कृतं भवेत् सर्वश्च जनो मां स्वाधिनं स्पष्टं पटयेत्। अतः त्वदाशीर्भिरेव मदीयं शिवं स्यात्। त्वं सर्वथा निर्वृणीष्व ।

भीमभटो मातरमेवमाश्वास्य ततो निरगच्छत्।

---

१. श्रथ दौर्बल्ये। २. स्थूल परिबृंहणे। ३. तड आघाते। ४. भाम क्रोधे। ५. क्षिप प्रेरणे। ६. शाकटायनमते कथादित्वाद्गणधातोः पुक्। ७. अक्षणः परं परोक्षम्, तदस्त्यस्मिन्निति परोक्षः, अर्श आद्यच्, परोक्षा क्रिया इतिवत्। ८. पटुमाचक्षीत ( तत्करोति तदाचष्टे ) ( प्रातिपदिकाद्धात्वर्थे णिच् )।

पौराश्च तं सर्वं बुद्ध्वा व्यचिन्तयन् यद्राज्ञा भीमभटस्य परमनौचित्यं कृतम्। समरभटो हि राज्यमस्यापहर्तुं न प्रगल्भते, तद्भीमभटकृतपूर्वसेवा प्रत्युपकर्त्तुमयमस्माकं समयः। एवं निश्चित्य ते तं धनैस्तथा सहायुञ्जन् यः स भृत्यैः समायुक्तः ससुखमवसत्। कनिष्ठस्तु तस्य वधावसरमेवाहर्निशं न्यरूपयत्।

एकस्मिन् दिने शङ्खदत्ताख्यः शूरो युवा धनी च द्वयोर्वयस्यो विप्रः सम रभटमेत्याब्रवीत्, 'भ्रात्रा वैरं न युक्तम्, नापि चैष ते धर्मः। स ज्यायान् इति तद्बाधने परा तेऽपकीर्तिर्भवेत्, सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते अतः परस्परस्मिन्नेवमान्वीप्यमन्तः सामीप्यञ्च विधेयं येनान्योऽपि भवत्साभ्रा-त्यमनुकुर्वीत।' किन्त्वेवं ब्रुवन्तं तं स निरवभर्त्सत इति तत्कोपतो धीरः शङ्खदत्तः तद्विजिगीषया भीमभटेनैक्सरयं व्यधात्।

एतस्मिन्नेवान्तरे देशान्तरादागतो मणिदत्ताख्यः कोऽपि वणिक् अत्युत्तमम् अश्वरत्नमेकमानयत्। तं तत्रानीतं शशाङ्कधवलं, विशेषश्रुतिमधुरहेषम्, दुग्धाब्धेरुत्थितमुच्छ्रितकल्लोलजालमिव, चूडामण्यङ्गदादिभिः समायुक्तम्, शङ्खदत्तेन चारयात श्रुत्वा, भीमभटस्तं हयोत्तमं तस्माद्वणिग्वराक्रेतुम् अशंसत्यापत्। समरभटश्चैतदवगत्य तत्रैव द्विगुणेन मूल्येन तमश्वं तस्माद्वणिजो मार्गितिस्म। परतन्त्रीकृतञ्च तमश्वं यदा स तस्मै नाददात् तदा स बलात्तं नेतुं प्रावर्ततेत्यु-भयो राजपुत्रयोर्धाविता शस्त्रपाणयो भृत्या, अन्योन्यान् असंयन्त असस्सङ्ग्रा मन्त। भीमभटभुजप्रचण्डदोर्दण्डनिहतानुचरसमरभटस्तद्भयात् अभज्यत। भज्यमानञ्च तं पृष्ठतः केशेषु समाकृष्य प्रमन्युः शङ्खदत्तो यावज्जिघांसति तावद्भीमभटः पश्चादागत्य, 'आस्तां तावत्, एवं कृते तातस्य दुःखं भवेदित्येन न्यवारयत्। इत्थं शङ्खदत्तेन मुक्तोऽसौ समरभटो व्रणैः रक्तं वमन्नरतः पलाय्य पितुः पार्श्वमगात्।

अत्रान्तरे स्वीकृताश्वं तं वीरं भीमभटं कश्चिद् ब्राह्मणः क्षणादुपेत्य विजने नीत्वा समभाषिष्ट यन्माता मनोरमादेवी, पुरोहितो यज्ञस्वामी, पितृमन्त्री सुमतिश्चैव त्वामधुना सन्दिशन्ति 'यदस्मिन् व्यतिकरे एवम्भूते शत्रुतामुपेते तव पितरि, यशस्काम्यन्, धर्मम्, आत्मानम् आयतिञ्चात्मनो रिरक्षिषुर्यदस्माना-

१ गल्भ धार्ष्ट्ये। २ रूप रूपक्रियायाम्। ३ भर्त्स तर्जने। ४ सत्यशब्दाण्णिच्, आपुक् ('सत्यापपाश०–')। ५ मार्ग अन्वेषणे (आधृषीय)। ६ असिभिर्व्रन्त ('कर्तृकरणाद्धात्वर्थे')। ७ भञ्ज, भृज गतौ।

त्महितानवगच्छसि तर्ह्यर्केऽस्तगतेऽस्मिन्निर्दिष्टसमयेऽलक्षितो निर्गत्य स्वसिद्ध्यै मातामहगृहमिहि । एव वादयद्भि[1]स्तै सद्दल स्वर्णपूर्णप्रेषित भाण्डमेतन्मद्ध स्तेन गृहाण ।

तस्माद्द्विजादेतदाकर्ण्य तथेत्यभिनन्द्य च गृहीततत्स्वर्णसद्दलभाण्डो भीम भट प्रदत्तमातृवाचिकानुरूपप्रतिवाचिक त द्विज व्यसर्जयत् । अस्तमिते चार्के कृपाणपाणिस्तत्तुरङ्गमपृष्ठमध्यममध्यारुह्य गृहीतहेमरत्नेन पृथग् अश्वयता[2] शङ्ख दत्तेन सह श्वेतयमान[3] तत प्रातिष्ठत ।

इति कौमुदीकथाकल्लोलिन्या गणनिर्देशात्मक षष्ठ कल्लोल ।



१ वद सन्देशवचने । २ अश्वेनातिक्रामता ('तनातिक्रामति') इति णिजन्तात् शतृप्रत्यय । ३ श्वेताश्वेनातिक्रामतीति (श्वेताश्वाश्वतरगालोडिता ह्वरकाणामश्वतरेतकल्लोपश्च) इति णिजन्ताच्छानच् ।

# अथ प्रक्रियानिर्देशात्मकः सप्तमः कल्लोलः

इत्थं ततो निर्गत्यातन् सवयस्यो राजपुत्रोऽतीतदविद्याध्वा निशीथे महच्छ्रवणमेकमापत्। तत्र च सवयस्यस्य तस्य पतद्वाजिखुरक्षुण्णशरशब्दप्रबोधितम्, उद्वर्त्त्यच्छावकैः सहोत्थाय सिंहमिथुनमेनमश्वौ नखैररोप्रियापार्थक्ये विदारमुपचस्कारेति समित्र सोऽवारुह्य यावत्तुरगाववलोक्ते (ण्यन्तप्रक्रिया) तावद्विगलितान्त्रौ तावुभौ भूमावपतताम्। तदवलोक्य विषण्णो भीमभट, 'कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि'–'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता'–तथा–'वामे विधातरि कथं विपदा निवृत्ति'–इत्यादि गालोडयमान[1] शङ्खदत्तमभाषत यद्विरुद्धात्स्वजनात्पलायिता अपि वयं विरुद्धाद्विधे पलायितुं कथं शक्नुम इति स एवेहैकान्ते कान्तारेऽश्वमात्रमहायानप्यस्मानसहायान् अबीभवत्[2]। अतर्कितोपनतैरेभिरात्मव्याघ्रप्रखरनखरक्षुरैरस्माकमाशातन्तुमन्तानवितानान् अलीलवन्[3]। यतो हि, एतावद्दूरमस्मान् ययो साहाय्यम् अशूशवन्[4] तौ हयावपि अस्तृपातामित्यमृषा तां शिनोक्तिं कर्तुमिदानीं क सहयुज्यात्। कथमधुना नैशोऽस्मिन् तमसि पन्थामियमरण्याऽटवी गम्या! एतदाकर्ण्य तत्सुहृच्छङ्खदत्तोऽब्रवीत्, 'वयस्य, धैर्येण विधुरोऽपि विधुर्नैतु शक्यते इति नास्माभिरधैर्यैर्भाव्यम्। एहि, समारूढधैर्यावावामग्रे व्रजाव इति'। एव वादिना शङ्खदत्तेन सह शनैः शनैर्व्यतिक्रान्तकान्तार शरपातनिपाद स राजसूनुस्ता विभावरीं पर्यजीहपत्[5]।

प्रातरुदयाचलसानूदितभानुर्निविडतरुलताध्वान्तच्छन्नान् मार्गान्, तद्विरहिताटवीप्रदेशाँश्च समचीवकासत्[6]। सिंहादिसङ्कीर्णायामटव्यां गमनानुपन्नप्राप्तैरन्यैः कतिपयपान्थैः सह पुरोगच्छन् मध्याह्नेऽध्वक्लममपनिनीषु, सिस्नासु, पिपासुश्च राजसूनु शीतलमलिलमलीललतेति नातिदूर गत्वा स तपस्विजनोटजसङ्कीर्णजह्नुकन्यापुलिन स्वसहगामिभि प्रापिपत्। शीतैः स्वादुभिश्च गाङ्गैर्वारिभिस्तत्र स्नातश्च शङ्खदत्तानीतवन्यफलमूलादिस्वयमश्नन्न्यानपि समाशिशत। तदनन्तरं तत्रोत्तरीतुमशक्याया पय पूरपूर्णपुलिनाया समुच्छ्रितैस्तरङ्गहस्तैरसकृन्निवारयन्त्या इव जाह्नव्या कूलेन गत्वा विजनोटजाङ्गणस्थमेकत्र स्वाध्यायसलग्न ब्राह्म-

---

१ श्वेनाश्वाध्वतर०' इति णिच्। २-३. 'ओ पुयण्ज्यपरे'। ४ 'णौ च सश्च'। ५ 'अर्तिह्रीव्ली०'। ६ 'नाग्लोपिशास्वृदिताम्'। ७ लल ईप्सायाम्। ८ आप्लृ लम्भने। ९ अश भोजने।

# अथ कण्ड्वादिनिर्देशोऽष्टमः कल्लोलः

ततो वैतालावाप्तिसमुद्योगतत्परो नृपोत्तमः पुनरपि तच्छिंशपातरुमवाप्य पूर्ववदेव स्वस्कन्धोटसवेतालशवस्तूर्णीं त्वरितचरणः चरणाञ्चकार[1]। प्रयान्तं च तं तत्पृष्ठगो वैतालश्चिन्त्रीयमाणः समुवाच यदन्धतमसाच्छन्नायां तमिस्रायां यातायातं कुर्वन्नूनं त्वं तन्तस्यसि[2] इति त्वत्खेदाप-

प्रियापार्थक्ये ( कण्ड्वादयः )

नोदाय भूयस्त्वां कथामेतां कथयामि—

अस्ति भूमण्डलविख्यातं पाटलिपुत्रनामकं नगरम्। पुरा तत्र *गुणगणाग्रहग्रहिलो विक्रमकेसरीनामा नृपतिर्बभूव। तस्य गृहे शक्रशापवशाद्* धृतशुकशरीरो मेधावन्[3] दिव्यविज्ञानवान् सर्वशास्त्रपारङ्गमो विदग्धचूडामणिनामा शुक आसीत्। तदुपदेशेन नृपात्मजो मागधीं भार्यां चन्द्रप्रभाभिधामुपयेमे। तस्या राजपुत्र्या अपि तथैव परमविज्ञानशालिनी सोमिकानामशारिकाऽभवत्। उभे ते शुक-शारिके निजविज्ञानैर्निजप्रभू दम्पती सेवमाने तत्रास्ताम्।

एकदा शारिकया सहैकशय्यासनाहारविहारं कामयमानः शुकः शारिकां तथाकर्त्तुं प्रास्तावीत्। सारिका चैतदाकर्ण्योवाच यत्पुरुषा हि दुष्टाः कृतघ्नाश्च, स्वल्पकालमेव ते *रज्यन्ति*, परिपूर्णार्थाश्च *विरज्यन्ति*, इत्यचिरमेव स्वजनेभ्यो वीर्ष्यन्ति[4]। अतो नाहं पुरुषसंसर्गमिच्छामीति। एतेनातिशयं हृणीयमाणः[5] शुकः *शारिकाम् अगदत् यन्नैवं पुरुषा दुष्टा भवन्ति अपि तु स्त्रिय एव नृशंसहृदयाः* स्वार्थमाधिकाश्च जगतीह दृश्यन्ते। इत्थमुक्तवति शुकेऽत्र विषये वृद्धिं गते चोभयोः पारस्परिके विवादे उभावपि तौ शकुनी यथास्वपक्षनिर्णयाय राजपुत्रं शरण्यमवर्ण्यताम्[6]। राजपुत्रश्च तयोर्विवादमाकर्ण्य कथं कृतघ्नाः पुरुषा इति प्रमाणयितुं सारिकामाह। सा च निजपक्षं पोष्टुं पुंदोषाख्यायिनीमाख्यायिकामेतामाख्यत्—

अस्ति सर्वभूमण्डलविख्याता कामन्दिका नाम महानगरी। तत्रार्थदत्ताभिधानो वणिङ् न्यवसत्। तस्य निजसन्ततिसम्पत्तिरसम्भूयसी अपि पैतृक-

---

कण्ड्वादयः।

१. चरण गतौ 'यस्य विभाषा'। २. तन्तस दुःखे। ३. मेधा आशु ग्रहणे। ४. ईरज ईर्ष्यायाम्। ५. हृणीङ् रोषणे लज्जायाञ्च। ६. वरण गतौ।

सम्पत्तिसन्ततिरसम्भूयसीत्। वार्धके तस्य धनदत्तो नाम पुत्रोऽजनि। उपरते च पितरि स युवा द्यूतादिव्यसनासक्तो विगतधनो दौर्गत्यं गतः परित्यक्तनिजदेशो देशान्तराणि भ्रमितुं निर्यान् चन्दनपुरनाम्नि नगरेऽशनार्थी एकस्य वणिजो गृहमविशत्। स च वणिक् युवानमेनमवलोक्य पृष्टान्वयादिः कुलीनमवगत्य कृतसत्कारः स्वगृहेऽवस्थाप्य विविधालङ्कारैरुपस्कृतां सुसंवर्धितां च रत्नावली-नाम्नीं निजकन्यां ददौ।

अथ गतेषु केषुचिद्दिनेषु सुखविस्मृतदुर्गतिर्धनदत्तो वल्गूक्त्या नर्मदया धृत्वा श्वशुरगृहकृतवसतिरपि व्यसनोन्मुखः तत्सुतैकसन्तानमवन्तं श्वशुरं कथमप्यनुमान्य कया वृद्धया स्त्रिया सहात्मना तृतीयो रत्नावलीमादाय तद्देशात्प्रस्थितवान्। गच्छन् सोऽटव्यामेकस्याम्, मुक्ततस्करभयो भार्याभरणान्यादायार्थी गुणवतीमपि भार्यां जिघांसुस्तया वृद्धस्त्रिया सहैकस्मिन् गर्ते तौ निक्षिप्य ततो गन्तुमचिन्तितमतुरण्यत। एवं क्षिप्त्वाथ तत्र तिरोऽस्यति तस्मिन् वृद्धा तु व्यपद्यत किन्तु लतागुल्मादिजालपतिता रत्नावली प्राणैर्न व्यदुव्यतेति गतेषु केषुचित् क्षणेषु आयुषः शेषतया सा तस्माद्गर्तादुत्थाय समवलम्बितनृणगुल्मादिभिः शनाम्नी, चरणं क्षोदन्ती, पदे पदे पन्थानञ्च पृच्छन्ती पितुः पार्श्वं प्राप। अकस्मात्तत्र तथाभूतामागतामालोक्य पितृभ्यां ससम्भ्रमं पृष्टा रुदती सा सार्ध्वी एवमभाषत यन्मार्गे वयं चौरैर्लुण्ठिताः। अहञ्च तैर्गर्ते निपातितापि न मृतेति कारुणिकेनैकेन पथिकेन गर्तादुद्धृता दैवादिहायाता। तदाकर्ण्य नितरां दूयमानौ तद्दिनरौ तामाश्वास्य समुचितं भिषज्यन्तौ मातिशयम् अभिभिष्णज्यताम् इति कतिपयैरेवाहोभिः सा पूर्ववदेव औरस्वत, वियुक्तभर्तृमंसमप्रचित्ता च पितृवेश्मनि तस्थौ।

व्यतीतेषु केषुचिद्दिवसेषु स्वदेशमागतो धनदत्तो धूतविनतद्विस्तो व्यचिन्तयत् यच्छ्वशुरवेश्म गत्वा रत्नावलीं गृहस्थितात्रोऽहं वा श्वशुरात्पुनः किञ्चिद्धनमानेतुं शक्नोमि। एवं स हृदये कृत्वा समवाप्तश्वशुरवेश्मा दूरात् स्वभार्यमालोक्य-

1. सम्भूयस प्रभूतभावे। 2. 'वञ्चाप्रमाप्यादने' णिच्। 3. वल्गु पूजामाधुर्ययोः। 4. तुरण त्वरायाम्। 5. तिरस् अन्तर्धौ। 6. दुवस् परितापपरिचरणयोः। 7. भिषज् चिकित्सायाम्। 8. भिष्णज् उपसेवायाम्। 9. उरस् बलार्थे।

तेति तया धावित्वा तत्पादयोर्गृहीतः। निजपत्नीं तत्रावलोक्य भीताय च तस्मै तत्पत्नी पितृभ्यां प्राग्वर्णितं सर्वं न्यवेदयत्। ततस्तया सह निर्भयं श्वाशुरशरणं प्रविष्टो दृष्टा हृष्टाभ्यां श्वशुराभ्यां समभिनन्दितश्च रत्नावल्या सह श्वशुरश्रियं भुञ्जानो यथासुखं कतिपयदिनान्यास्त।

एवं श्वशुरवेश्मनि ससुखं निवसन्नपि स चैकदा निशीथेऽङ्कसुप्तां स्वभार्यां निहत्यापहृततदाभरणो भुरणितनिजनृशंसपाशवव्रत्तिरलक्षितो निजचयमचैषीत्।

एवं पुरुषाः पापाः। यामेव मूर्तिं निजहृदयमन्दिरे प्रेम्णा सपर्यन्ति तामेवार्थान्धाः समरर्यन्तीति यथाभिलषितं क्रौर्यं चेक्रीयिषयिषवो नृशंसाः पुरुषाः प्रशंसास्पदं कथं मन्येरन्।

इति कौमुदीकथाकल्लोलिन्यां कण्ड्वादिनिर्देशेऽष्टम कल्लोल ।



१. भुरण धारणपोषणयोः। २. सपर पूजायाम्। ३. अरर आराकर्मणि।
४. करोतेर्यङन्तात्सन्नन्ताण्ण्यन्तात्सन्नन्ताद्धुप्रत्यय.।

( इति कण्ड्वादय. )

# पद-वाच्य-लकारार्थनिर्देशात्मको नवमः कल्लोलः

एवं पुंदोषदर्शिनीमाख्यायिकामाख्याय तूष्णीकाम् आसीनायां सारिकायां राजपुत्रः स्वपक्षं पोषयितुं शुकाय अतिष्ठेत इति तया प्रियापार्थक्ये विप्रवदमानो राजसुते तिष्ठमानः शुकशकुनिरेवं वर्णयितुं (आत्मनेपदप्रक्रिया) प्राक्रमत—

*अस्त्येका हर्षवती नाम नगरी। तत्र* बहुकोटीश्वरस्य धर्मदत्ताख्यवणिजो वसुदत्ताभिधानयातिरूपसम्पन्नया, प्राणेभ्योऽप्यधिकप्रियया सुतया बभूवे। तां च तेन समानाय रूपयौवनसम्पत्तये, ताम्रलिप्त्यां कृतवसतये, समुद्रदत्ताय दत्त्वा निरतिशयं कन्यापितृत्वानृण्यसुखम् अनुबभूवे।

एकदा पितृवेश्मनि कृतवसतिः, पत्यौ स्वदेशस्थे सति, दूरात् तत्रायान्तं कञ्चिद् युवानं दृष्ट्वा दुर्निवारमारमोहिता, सखीसाहाय्यानायितं तं प्रच्छन्न-कामुकं सा व्यसर्वैभजत। तदाप्रभृति च सदैवागच्छमानस्या रहसि प्रतिनिशम् अरंस्त।

अथ नगराग्रागमे स्वदेशान्तरस्याः पतिस्तत्रानुश्रौके इति प्रमुदितमानसा तन्माता नक्तं कृतमण्डनां तां तद्विजपतिसमीपं प्रेषितवती। किन्तु वसुदत्ताया अन्यामपक्रममानस्यास्त्वेकत्र रहसि वर्तमानावपि न *तौ* व्यसर्वहसतां नापि च व्यवदजल्पताम्। एवमेकत्र वर्तमानयोरपि षट्त्रिंशदङ्गुलयाङ्कयोरिव विरुद्ध-दिङ्मुखमुपरीनयोस्तयोः, पतिप्राप्तिवेऽपि जारं निध्यायन्त्यास्तस्या अत्य-परिश्रान्तः पतिरप्यशयिष्ट।

---

आत्मनेपदप्रक्रिया

१. अनुदात्तङित आत्मनेपदम्। २. 'प्रकाशनस्थेयाख्ययोश्च' इति प्रकाशने तङ्। ३. विभाषा विप्रलापे। ४. 'प्रकाशनस्थेयाख्ययोश्च' तिष्ठत्यस्मिन् *जनाः विवादपदनिर्णयार्थमिति स्थेयो विवादपदनिर्णेता अथवा तिष्ठति विश्राम्यति* विवादपदनिर्णयोऽस्मिन्निति विग्रहे बाहुलके अधिकरणे 'अचो यत्'। 'स्थेयो विवाद-स्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। अतो राजपुत्रं निर्णेतृत्वेनाश्रयन्निति। ५. प्रोपाभ्यां समर्थाभ्याम्। ६. भावकर्मणोः। ७. 'कर्तरि कर्मव्यतिहारे'। ८. प्रतिषेधे हसादीनामुपसंख्यानम्'। ९. विभाषाऽऽत्मनेपदम्।

भुक्त पीत-सुप्तेष्वथ सर्वेषु, निशि सन्धिं भित्त्वा चौर्याय क्रममाण[1] कश्चिद्क्रमणश्चौरो वासगृहाभ्यन्तरे न्यविक्षत[2]। तत्कालमेव च तम् अजानाना[3] वणिक्सुता निजजारकृतसङ्केता, सङ्गतिस्थानम् उपतिष्ठमानेन[4] मार्गेण निकेतनान्निसृत्य प्रस्थिते[5]। एतेन विस्मितेच्छश्चौरो व्यचिन्तयत् यदेषामाभरणानां कृतेऽहमत्र प्रविष्टस्तैराभरणैर्युक्तैषा निशीथे निर्गच्छतीति निरूपयामि तावत्कैषा विसर्जत्येतदनुजिज्ञासन् स चौरो गृहान्निर्गत्यालक्षितस्तद्दत्तदृष्टि, ससङ्केतसखीयुता वणिक्सुता ताम् अनुससार। सा च समवाप्तसङ्केतस्थानोद्याना, स्वकामुक वृक्षे लम्बमान रात्रौ सङ्केतस्थानागत नगररक्षिभिश्चौरबुद्ध्योद्बध्यमान पाशकण्ठ गतासु समवलोक्य विह्वलोद्भ्रान्ता स्वोर स्थलम् आघ्नाना 'हा! हतास्मि', इति विलपन्ती भूमौ निपपात। क्षणानन्तर तरोश्च तमथ गतासु निजजारमवतार्य अङ्गरागेण पुष्पैश्चालङ्कृत्य रागशोकान्धमानसा सा नि सज्ज तन्मुखमुन्नमय्य यावन् निस्ते तावद्वेतालाधिष्ठित स परपुरुषो दन्तैस्तस्या नासिका चिच्छिदे इति सव्यथाऽतिविह्वला सा तस्मादपाससार।

एव विनसोऽपि सा किंचित्सासुरसौ स्यादिति बुद्ध्या पुनस्त निपुण समपश्यत्[6] किन्तु वीतवेताल, निश्चेष्ट, मृतमेव तमवलोक्य भीता परिभूता च सा रुदती तस्माच्चचाल। एतत्सर्वं परिच्छन्नोऽवलोक्य किमेतया कृतमिति चौरो ऽचिचिन्त्रीयत, किमत परमिय कुर्यादिति द्रष्टु[7] जिज्ञासमानश्च कौतुकाद् दूरतश्च ता भूयोऽनुजगाम।

इत सा स्वैरिणी तस्मादागत्य सुप्तस्थितभर्तृक स्वक गृह प्रविश्य स्वकृत सर्वम् अपनाना[8] मोचै रुदती पतिमेवम् उदायत[9][10] यद्भर्तृरूप शत्रुरय नासिकाच्छेदेन माम् अर्ध्यकृत[11][12]। एव मुहुर्मुहु स्व पतिम् अपवदमानाया[13][14][15] क्रन्दन्त्या-

---

१ 'वृत्तिसर्गतायनेषु क्रम' इति सर्गे (उत्साहे) तङ्। २ 'नेर्विश'। ३ अनुपसर्गाज्ज्ञ। ४ 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्'। ५ 'समवप्रविभ्य स्थ'। ६ 'सधतेर्गतौ' इति पत्वाभाव। ७ ज्ञाश्रुस्मृदृशा सन इति प्राप्तस्तङ् 'नानोर्ज्ञ' इत्यनेन निषिध्यते। ८ आङो यमहनः। ९ विगतया नासिकयोपलक्षितेरयर्थादिह वेर्ग्रस्ययोरभाव। अत एव 'विनसा हतबान्धवा' इति भट्टि। १० सम्पूर्वकात् 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्'। ११ 'ज्ञाश्रुस्मृदृशा सन'। १२ 'अपह्नवे ज्ञ'। १३ 'यमो गन्धने'। १४ 'अवे प्रसहने'। १५ 'विभाषोपपदेन प्रतीयमाने'।

रतस्याः संरक्षिका, सर्वे तत्पारिवारिकाः परिजनाश्च प्राबुध्यन्त । तत्पिता चाधार्मिकसिरां तामवलोक्यातिक्रुद्धस्तत्पति भार्याद्रोहिणं समवेदिष्ट इति सक्रोधं तमनीताडत् । तथाभिहन्यमानोऽपि न किन्तु स मूकवत् किञ्चिदपि समवदत ।

एतत्सर्वमवलोक्य ततोऽपसृते चौरे, कोलाहलेन चावसितायां तस्यां निशि, आगमैमार्टे च तमोऽपहेऽहस्करे आस्थानमण्डपमध्यमार्वामति च भूभृति, तेन वणिजा छिन्ननासिकया सुतया सह निजजामाता न्यायालयं नीतः । राजा च सर्वं तद्वृत्तं श्रुत्वा मर्षमाणः, तेन स्वदारद्रोहिणर्वेन वणिक्सुतं मूर्धानमो न्यवृततद्वचा कृतनद्वधविज्ञप्तिर्हन्तुं प्रतिजज्ञे । परेद्यवि मडिण्डिमघोषं वध्यभुवं नीयमाने तद्वणिक्सुते स चौरो राजपुरस्तानागत्य प्रोवाच—'निरपराधमिमं मा भवन्त घातयन्त । यथा चैतद्वृत्तं, सर्वमहं तत् संविदे । मां राजाग्रे नयन्तां सर्वमहं तत्र उपदेक्ष्ये । इत्थं राजाग्रं नीतो गृहाभय. स चौरः आमूलाग्रं वृत्तान्तं राज्ञे न्यवेदयत् । असर्वाध यस मदीयः प्रत्ययश्चेत्तदाऽद्यापि तच्छुवस्या-स्येऽस्या. सा नासा दृश्यताम् । एतमावर्ण्य प्रेषितप्रेष्यमुखेभ्यो राजा स्वयं तथैव तदुपगम्य वणिक्पुत्रसम्बन्धं निरैस्यत । दुष्टाञ्च ताम् उदीक्ष्य, तस्याः कर्णावपि च कर्तयित्वा, देशात् निरैस्यत तत्पितुश्च दण्डं धनेन उदैनयत । चौरं प्रति चार्नाय तुष्ट पुरस्कृतं विधाय उद्भानयत । एतेनेत्थं समायातं वाग्ज्ञीयदुर्वृत्ति-दुराग्रहाग्रहिला महिला निसर्गगं शठा भवन्ति । नीताश्रुतनगमपि स्मृतिं चोरयन्ति, कौटिल्ये कौटिल्यमप्यतिशयन्ति । निजप्रेमपाशैराकृष्य पुरुषान् स्मृतिं चर्वयन्ति, स्वकटाक्षक्षुरनिक्षेपैरेव पुरुषहृदयं स्खलिलुनेते । अधरपर्यं परमूल्येनैव जीवनं

---

1. मतिशु० । 2. अजागर० । 3. 'विदिग्रन्थिउरवरतीनागुरगन्धानम्' । 4. 'निमज्जुरविन्दो ह' । 5. 'क्षाव उद्गमने' । 6. 'ज्योतिरुद्गमने इति वाच्यम्' तेनेह न तद् । 7. 'सम्माननोत्सञ्जन०' इति ज्ञाने तङ् । 8. 'समप्रतिभ्यामनाध्याने' । 9. 'हन' गिच्' इति क्रियेऽनुनासिकलोपः । 10. विदिग्रस्त० । 11. 'भासनो-पसम्भाषा०' उपमन्त्रणे तङ् । 12. 'वर्गणादिस्य चुलोर्वेति वाच्यम्' । 13. 'गन्धनावक्षेपण०'-अवक्षेपणे (भर्त्सने) तङ् । 14. 'अस्यतिवर्ति०', 'अस्यतेस्थुक्', 'वर्गणादिस्यचुलो०' । 15. 'सम्माननोत्सञ्जन०' इत्युत्सञ्जने (उत्क्षेपे) तङ् । 16. 'सम्माननोत्सञ्जन०' इत्यादिना गतौ तङ् । 17-18. 'न गतिहिंसार्थेभ्यः' । 19. 'कर्तरि कर्मव्यतिहारे' ।

परिक्रीणते[१]। महतोऽपि धनुर्धारिण कुसुमशरशरैरेव पराजयन्ते[२]। परिणाम जानाना अपि परपुरुषान् उपतिष्ठन्ते[३]। शैशवादेव प्रतारणे शिक्षन्ते[४]। यौवनेऽनेकान् गर्धयन्ते[५]। प्रतिज्ञातमनुक्षण मिथ्या कारयते[६]। मनोरमा अपीमा दृष्ट्वा को न विकुरुते[७]। तथापि विश्वस्तस्यानुरक्तस्य वधाय चेमास्तद्धृदयपटल एव निजशस्त्र सङ्क्ष्णुवते[८]। आत्ममहत्त्वप्रदर्शनार्थं तु यत्किमपि एता सङ्गिरन्ताम्[९] पर योषित पापा इति सवित्तिशीला सर्व एव संविद्रते[१०]।

पुरुषस्तु योषिदनुपातेन स्वल्पमेव सन्मार्गम् उच्चरते[११]। कुलीनो हि स शैशवे स्वभावत सच्छिशुषु संक्रीडते[१२]। कौमारे ब्रह्मचर्यपरायणो गुरुभ्यो विद्याम् आदत्ते[१३]। ततो गृहस्थमाश्रित्य सत्सन्तत्या एदिधिषमाणो[१४] निजकुलवशानुरूपा भार्याम् उपयच्छते[१५] इति न स कदापि परललना प्रकुरुते[१६]। पाताल तलस्पर्शिनि अभ्रेऽतलस्पर्शिनि पयोधौ वा यथासमय परार्थं पतित्वा भौतिक क्षणभङ्गुर शरीर प्रकुरुते[१७]। यथाशक्तिजीवनपर्यन्त हरि-गुरु-जनम् उपकुरुते[१८]। स्व यज्ञ कारयमाण[१९] सत्पात्रविप्रेभ्य कोटिशो घटोघ्नीरष्टापदसुसज्जितशफशृङ्गा गा संयच्छते[२०]। अद्वैततत्त्व संमुद्य[२१] मुक्तावुत्तिष्ठते[२२]। शरणसमागतसपत्नान् अधिकुरुते[२३]। दु खिन उपवदते[२४]। अन्यायञ्च अपवदते[२५]।

एवमुभयपक्षे प्रत्यक्षे न्यायदक्षो भवानेव सिद्धान्तपक्ष निर्णयस्व। एतावदुक्त्वा क्षणेनेन्द्रशाप शुक चित्ररथाभिधो दिव्यरथाधिष्ठितो दिव्यरूपे गन्धर्वो बभूव। सारिका चापि तत्काल क्षीणशापा तिलोत्तमा अप्सरा भूत्वा दिवमुत्पेदे।

---

१ परिव्यवेभ्य क्रिय'। २ 'विपराभ्या जे'। ३ 'उपाद्देवपूजा सङ्गतिकरण०'। ४ 'शिक्षेर्जिज्ञासायाम्'। ५ 'गृधिवञ्च्यो प्रलम्भने'। ६ 'मिथ्योपपदात् कृञोऽभ्यासे'। ७ 'अकर्मकाच्च'। ८ 'सम क्ष्णुव'। ९ 'सम प्रतिज्ञाने'। १० 'विदिप्रच्छि०' 'वेत्तेर्विभाषा'। ११ 'उदश्चर सकर्मकात्'। १२ 'क्रीडोऽनुसम्परिभ्यश्च'। १३ 'आङो दोऽनास्यविहरणे'। १४ 'पूर्ववत्सन'। १५ 'उपाद्यम स्वकरणे'। १६-१८ अत्र 'गन्धनावक्षेपण०' इत्यादिना क्रमश साहसिक्ये, उपयोगे, सेवने च तङ्। १९ 'विभाषोपपदेन प्रतीयमाने'। २० 'समुदाङ्भ्यो यमोऽग्रन्थे'। २१ 'उपसर्गादृस्व ऊहते'। २२ 'उदोऽनूर्ध्वकर्मणि'। २३ 'अधे प्रसहने' (प्रसहन क्षमा, अभिभवश्च) अत्र क्षमाया तङ्। २४ 'भासनोपसम्भाषा०' इत्यादिना उपभाषायाम् (उपसान्त्वने) तङ्। २५ 'अपाद्वद'।

ततो वैतालो भूपालमुल्ललाप, 'एवमेकैकं पृष्टौ तावन्योन्यविरोधिनीं कथां प्रकुर्वाणौ तत्र परस्परस्य निन्दां यद्यप्यकुरुतां तथापि वस्तुगतिरगतिकाऽनिर्णीता च तथैवावातिष्ठतेति राजन्, स्त्रीपुरुषान्यतरपापरतरत्वं त्वं वदस्व'। तदाकर्ण्य भूपतिरूचे, 'योगेश्वर, योषितः पापा अयमेव सिद्धान्तः पक्षः सर्वेषां नीतिविदनुभवशालिनां सम्मतः।

एवमुक्तवति भूभृति स वैतालः पूर्ववदेव तत्स्कन्धादन्तर्दधे। राजा चापि पुनस्तदन्वेषणपरश्रमं प्रतिपेदे।

निशि च समवाप्तशिंशपातरुर्नरपतिस्तथैवोद्धृतवैतालशवो भूयो भिक्षुसमीपमुपसर्तुं तत्वरे। पथि गच्छन्तञ्च तं भूभृतं तच्छ्रमापनोदार्थमिमां कथां पुनरुपाक्रमत वैतालः—

अस्ति पूर्वाम्बुधेस्तटे ताम्रलिप्ती पुरी। तत्र चण्डसेनाभिधानो राजाऽभूत्। स हि परस्त्रीपराङ्मुखोऽपि सदान्यलक्ष्मीसमुन्मुखोऽरिमुख्यान् व्यार्दयत। शत्रुलक्ष्मीणामपहर्तापि प्रजास्वप्यसम्पदः पर्यहरत्।

एकदा भूपतेस्तस्य सिंहद्वारे सत्त्वशीलाख्यो दाक्षिणात्यो राजपुत्रः समागत्य कर्पटमात्रासने निषद्य तत्र उपकुर्वाणो बहून्यब्दानि तिष्ठन्नपि नृपात् किञ्चिदप्यनुपलेभे। अतो निजदशायां भाग्ये च हृणीयमानोऽतिनिर्विण्णस्तत्रैवाऽस्थात्। कार्पटिको भूत्वा वनमाश्रयत्।

गतेष्वथ कतिपयेष्वब्देषु प्रजविना सप्तिना सञ्चरमाणो राजाऽऽखेटार्थमेकस्मिन् दिने मृगाटवीमाविवेश। तत्र विविधवन्यपशूनामाखेटं कुर्वन्नेकं महान्तं शूकरमनुधावन्नतिदूरं वनान्तरमवाप्य पश्चाद्विरहितसैन्यः पर्णतृणाच्छन्नमार्गे महावने परिभ्रान्तो दिङ्मोहं गतस्तेनैव एककार्पटिकवेषेण सत्त्वशीलेन समगत। तमवलोक्य भूपतिः सस्नेहं समपृच्छत् 'कच्चित्त्वं ताम्रलिप्तीमार्गं जानासि' इति। तदाकर्ण्य बद्धाञ्जलिः सानुरागः स कार्पटिकोऽप्यभणत् 'देव, मार्गमहं जाने किन्तु गन्तुमिदानीमसाधनम्। यतो हि कालोऽयं महतो निदाघस्य, मध्याह्नश्चायात्।

---

१. 'तत्पनावधेयत्व०' प्रकथने लङ्। २. 'इतरेतरान्योन्योपपदाच्च'। ३. 'समानकर्तृकयोः०' इति ज्ञाने लङ् ( निश्चिनु इत्यर्थं )।४. 'इरयोरामाश०'। ५. 'तत्पनावधेयत्वसेवन०'—इति सेवने लङ्। ६. 'तमस्तुनोपाकुरुत्'। ७. 'उपो गम्यृच्छिभ्याम्', 'वागम' 'अनुदात्तोपदेश० 'इत्यादिकात्'। ८.'ज्ञाति नुप्रत्ययो०'।

स्फुरद्रश्मिशिखाजाले रविर्विर्तपते । अत आगमयस्व तावत् । माऽग्रे समृत । क्षणञ्चेह उपतिष्ठताम् । तदाकर्ण्य राजा तमभाषत, 'तर्हीह क्वापि वर्तते चेत्पानीयमानीयताम् । कार्पटिकस्तत्तथेति प्रतिजानानो राजान नेदीयसि प्रवहन्तीं नदीमनैषीत् । तत्र विपर्याणीकृत कृतविवर्तनम् अपस्किरमाण तदीयाश्व प्रदत्ताम्बुश पकवल विगतश्रमञ्च चक्रे । कृतस्नानाय राज्ञे च स्ववसनाञ्चलाद्योन्मुच्य प्रक्षालितानि हृद्यान्यामलकानि समुपानिन्ये । कुत एतान्यासादितानीति भूप तिना पृष्ट कार्पटिकोऽतिप्रह्व सामलकाञ्जलिरुवाच, 'देव, मदीयैषा वृत्ति — दश-वत्सराणि व्यायायन् परित्यक्तभवच्चरण अहमिह देवदेव महादेवमाराधयन्नामलकानि भ्नयामि। एतदाकर्ण्यातिकृपाक्रान्तेन हीणेन च राज्ञैतच्चिन्तयता अन्र्वतप्त यद्भृत्येषु क्लिष्टाक्लिष्टमजानतो नृपान्, तद्विषये राज्ञोऽवोधयन्त परिवारञ्च धिक्। एव सञ्चिन्त्य राजाऽनुबध्नत कार्पटिकस्य हस्तात्कथञ्चिदतिसङ्कुचितोऽप्यामलकद्वयमुपादाय अभुंक्त पीतपानीयश्च तेनैव कार्पटिकेन सह तत्रैव विशश्राम ।

व्यतीतेषु च केषुचित्क्षणेषु सपर्याणीकृत चारुतरय हय समारुह्य विक्रममा र्गेन तेन तत प्रतिष्ठमाने राजनि मार्गप्रदर्शनार्थञ्चाग्रे सरति पदातौ, तस्मिन् कार्पटिके, पथि समवाप्तनिजसेनश्चण्डसेन स्वपुरीमवाप् । तत्र च प्रख्यापित कार्पटिकभक्तिः, प्रदत्तवहुविषयोऽपि न तद्भक्तिनिस्कृतिममन्यत । एतेनातिकृतज्ञ सत्वशीलो विमुक्तकार्पटिकवृत्तिश्चण्डसेनस्य पार्श्वे स्थित्वा तमेव प्रत्याशुश्रुपत् ।

एकदा राजा तमुपह्वरे समुपाह्वत सिंहलपते सुतामामार्थं याचितु सिंहलद्वीप गन्तुञ्च न्ययुङ्क्त[11] । अत सत्वशीलोऽधिवमना भूपादिष्टैर्द्विजै सह पोतमधिरुह्य तत्र गन्तु समुद्युक्तेति तत्पोतोऽध्यरोहयत[12] ।

---

१ 'उद्भिभ्या तप'। २ 'आगमे क्षमायाम्' (मा त्वरिष्ठा इति भाव )। ३ 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्', 'हस्वादङ्गात्', ४ 'अकर्मकाच्च'। ५ 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्', 'अपाच्चतुष्पाच्छकुनिष्वालेखने'। ६ तपतेर्भावे लुड् 'तपोऽनुतापे च' (अविचार्य कार्य कृत्वा पश्चादशोची त्यर्थ )। ७ 'भुजोऽनवने'। ८ 'वे पादविहरणे'। ९ 'प्रत्याङ्भ्या श्रुव'। १० 'निसमुपविभ्यो ह्व'। ११ 'स्वरायन्तोपसर्गादिति वक्तव्यम्' इति सहकारेण 'प्रोपाभ्या युजरयज्ञपात्रेषु'। १२ 'णेरणौ यत्कर्मणौ चेत्स कर्त्ताऽनाध्याने'।

च तां तत्र कृतदेवीप्रणामोऽभ्यर्चितचण्डीचरण किमेतदिन्द्रजालं स्यादित्याश्चर्येण तदग्रतो यावत्समुपविशति तावदुद्घाटिताररा, रराज तत्रैका दिव्या कन्यका। देव्यग्रगतप्रभामण्डलोद्गता, प्रफुल्लाब्जवदना, पुष्पधनुरपरिमिता, मृणालनालमृद्वङ्गी, सञ्चारिणी सरोजिनीव, स्त्रीसहस्रपरिवृता सा च देवीगर्भगृह सत्त्वशीलस्य हृदयञ्च सममेव प्रविवेश। विहितवरिवस्या सा देवीगर्भगृहात्तु निरगात् किन्तु सत्त्वशीलस्य हृदयं निविश्य शूकशिखाप्रभक्तिरिव तत्रैव स्थितापि देवीप्रभामण्डलमाविशत्। सत्त्वशीलोऽपि च तत पश्चात् तत्रैव प्रविष्टवान् इति तदन्त सर्वासां भोगसम्पदां सङ्केतोद्याने इव अन्यस्मिन्नेवोत्तमपुरे मणिपर्य्यङ्किकानिषण्णा कन्या तामवलोक्य समासादिततत्पार्श्व तत्रोपविश्य सोत्कम्पपुलकैस्तदालिङ्गनोत्सुक्तामाविष्कुर्वन् चित्रलिखित इव तन्मुखासक्तलोचनोऽवृतत्। सा कन्या च तदानीं साङ्गमपि तमेवमनङ्गाविष्टमवलोक्य चेटीमुखमद्राक्षीत् इतीङ्गितज्ञास्तास्त तत्कालमब्रुवन्, 'त्वमस्माकमतिथिरित्यस्मत्स्वामिनीकृतातिथ्य गृहाण, उत्तिष्ठ, नेनिग्धि, अशान' इति। एतदाकर्ण्यावलम्बिताश कथमप्युत्थित स ताभि प्रदर्शितामुद्यानवापिकामेकां ञातु गतस्तत्र निमग्नस्ताम्रलिप्त्या चण्डसिंहनृपोद्यानवापीमध्यात्तत्क्षणमुत्तरथौ। तत्र चाकस्मादात्मानमवलोक्याचिन्तयत् 'अहो किमेतत् छोद्यानम्? क्व च दिव्य तत्पुरम्! अमृतासारसमं च क्व तद्दर्शनम्। क्व च सद्य एव तद्वियोगगरलम्। अह हि जागर्मीति नायं स्वप्नोऽत पातालकन्यास्ता मा पर्यमूमुहन्त[1] एतद्ध्रुवम्। एव ध्यायन् तत्कन्यावियुक्त उन्मत्त इव, ग्रहगृहीत इव कामार्तस्तत्रैव भ्राम्यन् विललाप। वातोद्धूतैः पिशङ्गैः पुष्परेणुभि, विप्रयोगानलैरिव त परीताङ्गमवलोक्योद्यानपालकाश्चण्डसिंहमहीभृतं व्यजिज्ञपन्निति स स्वयमप्यागत्य तत्र तदवस्थ तमदर्शत्। सान्त्वयित्वा च तं सर्वं स्ववृत्तान्तं समुद्घाटयितुमेव त निरवभाव, 'सखे, क्व प्रस्थापितस्त्वं क्व गत? क्व चायं कुसुमशरशरस्त्वयि निपतितो य एव तवासह्यदुःखाय पर्य्यङ्गृपत्[2]? तच्छुत्वा सत्त्वशील सर्वं स्ववृत्तान्तं तस्मै शशास। तन्निशम्य तदानृण्य गन्तुं समुपनन्धावसर इव वीरो राजा तं तेनैव मार्गेण तत्प्र-

---

१. 'युद्भ्यो लुङि' (पुषादित्वादङ्)। २. अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्त परस्मैपदं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवस' इत्यनेन निषिध्यते। २ द्युतादित्वात् परस्मैपदे च्लेरङ्।

लापैवायुदि रूनितनिजभुजल्तैर्विकीर्णकुसुमै पादपैरानन्यमानयैव स्वयं तदुद्यान गत्वा च प्रश्रयावनततया पार्थिवो निजातिथ्य स्वीकर्त्तु प्रार्थयामासे। राज्ञा चैत-दाश्चर्यं सत्त्वशीलप्रदर्शिनमार्गेण तत्र या देवीं द्रष्टुमागतमात्मान निवेद्य क्या त्वयाऽभ्यर्थितास्मदातिथ्ययया भूयते इति सा समपृच्छि। तच्छ्रुत्वा तया कौतुकात्त-त्रिजगदद्भुत पुरमवलोकयितुमायाता कन्याहमित्युदतारि। एतेन विहसता राज्ञा प्रयुदतार्यत यत्स्नानवापिकाया यदनेन सत्त्वशीलेन सह पूर्वं सहदित तत्सर्वम-हमनेन श्रवादिषि। अतोऽस्मद्दर्शनार्थं देव्यैव पर्य्याप्यते। स्वसत्कृतिस्वीकृता विश्रमन्यमनस्क राजानमवगत्य दैत्यकन्ययाऽत्यन्त जंग्ले। तथापि तत्सत्त्वोत्क-र्षेण, गाम्भीर्येण च किंकरीकृतया तया स्वकीयातिथ्य राजान स्वीकारयितु पुनरपि स्ववाणीवीणास्वनो व्यतायत। येन च मन्त्रमुग्धेनेव सत्त्वशीलसखेन तथेत्युक्त्वा तया सह गत्वा वापावृतत्पापे तस्मिन्नन्तस्तथैव प्रवेशितेन दिव्यं तदपर पुर ददृशे। नित्यमप्रद्धसर्वर्त्तु, सदापुष्पफलद्रुमयुक्ते, रत्नकाञ्चननिर्मित-मेरुपृष्ठे इव च तस्मिन् पुरे महार्हे रत्नासने समुपावेशितेन राज्ञा तत्कन्याकृत-यथोचितापचितिर्गृहे। अनन्तरञ्चेत्थ कन्यया निजपरिचयोऽदायि—'देव, अहमसुरेन्द्रस्य महात्मन कालनेमे कन्या। जनकश्च मदीयो विष्णुना अवधि। इदञ्च पैतृक मे पुरद्वय विश्वकर्मणा निरमायि। सर्वकामदेऽस्मिन् पुरे न केनापि जीर्यते न म्रियते। अत्र चेदानीं त्वमेव मे सर्वस्वम् इति सपुराह तव वशे वर्ते।' एव समर्पितसर्वस्वा सा भूपतिनोचे 'यद्येव तर्हि त्व मया वीराय, सुहृदे, बान्ध-वाय च सत्त्वशीलाय प्रदीयसे। अनेन तव पाणिर्ग्राहिष्यते।' मूर्तिमता देवी-प्रसादेनेव नृपेण तथोक्ता सा दैत्यकन्यका 'तथास्तु' इत्यन्वमन्यत। अत कृत-तद्दैत्यकन्यापाणिग्रह, प्राप्तासुरपुरविश्वैश्वर्य, सत्त्वशीलो भूपतिनोदे, 'त्वद्दत्ता-मलक्योर्भुक्तयैकस्यामलकस्य सशोधितर्णेनापि मयेदानीं द्वितीयतस्तेऽधमर्णेन स्थीयते।'

इत्थ तमुक्त्वा भूपेन स्वपुरीं गन्तुम् अकामि। अतस्तदनुमतेनोपात्तदैत्य-सुताप्रदत्तापराजितनामखड्गजरामृत्युहरभक्ष्यफलेन तेन तदुक्तवाप्याञ्च निमग्नेन

१ 'आदेच उपदेशेऽशितिति' इत्यत्र अशितीति कर्मधारयादित्सञ्ज्ञकशकारा-दौ निषेध। एश आदिशित्त्वाभावात् तस्मिन्निषेधाभावे आत्वम्। २. 'तनो तेर्यकि'। ३ 'जनिवध्योश्च'। ४ 'स्यसिच्सीयुट्तासिषु०' इत्यादिना चिण्वदिट्। ५ 'अनाचमिकमिवमीनामिति वक्तव्यम्'।

प्रणाम कर्त्तुं त्वामादेक्ष्यति। तदा पूर्वं त्व तथा कृत्वा मामादर्शय ततोऽह करिष्ये' इति स त्वया वाच्य । कुर्वति च तथा तस्मिन् त्वया तस्य शिरोऽसिना छेद्यम्। एतेन तस्य वाञ्छितया विद्याधरसिद्ध्या ते भविष्यते। तत्साहाय्येन च त्वयैव भूमिर्भोक्ष्यतेऽन्यथा तेन भिक्षुणा बलिरूपेण त्वमुपहारीकारिष्यसे। एतदर्थमेवयच्चिर तेऽभिलषित मया व्यधायि। अत पर किन्तु सिध्यताम् 'सिद्ध्या ते भूयताम्।' राजानमेतदुक्त्वा वैतालेन तेन प्रेतशरीराच्चिर्गत्य स्वाभीष्टमार्गोऽग्राहि। [ इति भावकर्मप्रक्रिया। ]

नरपतिश्च प्रीताद्वैतालात् क्षान्तिशाल श्रमणमहित विदित्वा गृहीतशव प्रहृष्टस्तस्मा प्रस्थित असृग्विलिप्ततलगौरास्थिचूर्णनिर्मितमण्डले, विन्यस्तशोणित पूर्णकुम्भके, प्रज्वलत्सैल्महाप्रदीपे, हुतपार्श्वस्थहुतभुजि, स्व

प्रियापार्थक्ये ( कर्मकर्तृप्रक्रिया ) इष्टदेवतपूजनसम्भृतोचितसम्भारे कृष्णपक्षक्षपारौद्रे श्मशाने तन्मागाभिमुखस्थितमकाकिन त श्रमण ददर्श। भिक्षुरत दानीं समुपानीतशव राजानमवलोक्योत्थाय त प्रशसन्

महतीं कृतज्ञता तस्य तदनुग्रहकृतेऽभिव्यानक् आशु च तस्य स्कन्धात्त शवमवतार यामास। तथा भस्मोद्धूलितगात्र, केशयज्ञोपवीती, सद्भावरितप्रेतचीवर, क्षण ध्यानस्थितो भूत्वा तस्मिन्छव मन्त्रबलादाहूत त वैतालवर प्रवश्य कपाला र्घपात्रेणार्घ्यम्, निर्मलैर्नरदन्तै पुष्पाणि, सुगन्धिविलेपनम्, मानुषनेत्रैर्धूपम्, मासैर्बलिं च क्रमाददत्। परिसमापिततत्सपर्य पार्श्वग राजान भूतले तस्मा ष्टाङ्गप्रणाम कर्त्तुं निरदिशत्। तदाकर्ण्य स्मृतवैतालवचा भूपस्तमादौ तथा कृत्वा दर्शयितुमादिशदिति यावदेव स भिक्षु, साष्टाङ्गो भूमौ निपतति तावदेव राजाऽसिस्तस्य शिरोऽच्छिनत्। उदराच्च तस्य समुत्पाटित हृत्पद्म तस्मै वैता लाय चोपाहरत्।

एव सजाते प्राणैर्भूतगणै साधु! साधु!! इत्युच्चारिते सति तुष्टो वैताल स्तस्माच्छवादवादीत्–'राजन्, त्व हि मयाऽयर्थं क्लेशित इति तवायासविचा रेणापि मदीयन हृदयन भिद्यते। किन्त्वधुना तवाभिनिवशफलमुपाचाति

---

⊛ कर्मकर्तृप्रक्रिया ⊛

१ असे करणत्वेऽपि कर्तृत्वविवक्षाया प्रथमा। २ कर्मग कर्तृत्वविवक्षाया भिद्यतेरकर्मकत्वाद्भावे प्रत्यय तृतीया। ३ 'कर्मवत्कर्मणा तुल्यक्रिय' इति कर्तुरभिहितत्वात्प्रथमा।

भूयोऽवादीत् यदङ्गीव किल राजा त्रिविक्रमसेनो वैतालानुग्रहेण सर्वमिष्ट प्राप्तवान्। तस्मात्त्वमपि मन्त्रमिम मत्तो गृहीत्वा निर्विषादस्तमेव वैतालमुत्य-मनेन मन्त्रेण प्रसादयन् प्रभुणा मृगाङ्कदत्तेन सङ्गममवाप्स्यसि। उत्साहभाजा हि न किमप्यप्राप्यम्। भग्नोत्साहश्च सर्व एवावसीदति। त्वञ्च मदीय सर्पदंश-हर्तेति मे बन्धुरतरत्वप्रीत्याऽहमेतन्निदिशामि। त्वमवश्यमेव कुरु।

एवमुक्तवतस्तस्माद्विप्रात्सनियममन्त्रमादाय प्राप्तोज्जयिनिरह तत्र श्मशाने रजन्या कृतशवस्नपनादिस्तन्मन्त्राहूततच्छववैतालं यथावदभ्यर्चितवान्। स च तेनातीवसन्तुष्टोऽभीष्ट वर मह्य याचितुमकथयत्। अहञ्च 'यत्र मदीय प्रभुर्मृ-गाङ्कदत्तो वर्तते तत्रैव मा नय। नात परमन्यो मे वरो वर्तते' इत्यकथयम्। वैतालेन चेत्थमाकर्ण्य मा स्वपृष्ठे समारोप्य प्रेततनुप्रविष्टेन नभोमार्गेण च गन्तु प्रावर्ति। अह च युष्मानवल्प्तेत्र श्रीमत्पादमूलम् अनैयम्। समासकृत्यो मया च विसृष्ट स एवाय वैताल इदानीं यथेच्छ गत। नागशापाद्भवद्वियुक्तोऽह यथाऽधुना श्रीमता समगसि तथा स इदमवधिर्वृत्तान्त।

एव श्रुतात्मामा येदन्तो मृगाङ्कदत्तो निजकान्तानिमित्तमुज्जयिनीं गच्छन् पारावतारव्यमुनिशापभ्रष्टक्रममिलितकतिपयामात्य, सम्भावितभाविशेषसम्पत्ति-र्मुमुदे। [ इति कर्मकर्तृप्रक्रिया ]

परेद्युश्च विक्रमकेसरिणा, गुणाकरेण, विमलबुद्धिना, विचित्रकथेन, भीमपरा-क्रमेण, प्रचण्डशक्तिना, श्रुतधिद्विजेन च युक्त शापविश्लेपितान् शेषान् सुहृदश्चिन्वान शशाङ्कवत्या सम्प्राप्त्यै आत्मनाऽष्टम उज्जयिनीमभ्यचलत्।

प्रियापार्थक्ये (लकारार्थप्रक्रिया) क्रमाच्च स ग्रीष्मशुष्कतोयाम्, तरुलताविरहिताम्, अहस्क-रप्रखरकरातिसन्तप्तवालुकाम्, जनरहिताम्, मरुमरीचिभि-रुद्यद्दुदावानलज्वालामालाभिरिवावृताम्, उच्छुष्कमर्मरस्तृ-णैर्विकीर्णकेशामिवावलोक्यमानाम्, आतपक्लान्तोदन्यन्मृगारवै रुदतीमिव प्रतीय-मानाम्, विशङ्कटाम् विन्ध्याटवीं क्षुत्पार्दितै सचिवै सार्धं परस्पर-'स्मर' स विक्रम

१ मा श्रीमत्पादमूले अनयत् इति विवक्षाया मुख्यकर्मण कर्तृत्वविवक्ष-याऽपि गौणकर्मणो वर्तमानत्वात् 'सकर्मकाणा प्रतिषेधो वक्तव्य' इति यगात्मने-पदयोर्निषेध। [ इति कर्मकर्तृप्रक्रिया ]

केसरिन्, केसरिणं त्वो हनिष्याव।[1] अभिजानासि गुणाकर, यद्वनेऽभुञ्ज्वहि;[2] पुष्पके भीमपराक्रम, स्वालये निवत्स्यावस्तत्र[3] स्वप्नं द्रक्ष्याव' एवमालपन्नुदलङ्घयत्। गत्वा चाग्रे ददर्शार्कतापगलितामृतांशुद्रवमिव स्वच्छशीतजलम्, दिगन्तव्यापि-विस्तारम्, आत्मनः प्रतिबिम्बमालोकयितुम् विनिर्मितं त्रैलोक्यलक्ष्म्या मणि-दर्पणमिव स्थितं सुमहत्सर एकम्। तस्य च सरसः पश्चिमे तीरे सम्भवितो राजपुत्रो वायुनिधूनितविस्तारिशाखाभुजकदम्बकम्, मूर्धन्यमधुरस्वरितम्, नृत्यन्तं शङ्करमिव अभ्युन्नतेन व्योमपृष्ठावगाहिना शिरसा नन्दनोद्यानशोभामवलोक-यितुमिवोद्यतम्, दिव्यरसैः शाखावलम्बिभिर्दिव्यैः फलैः शोभमानम्, महान्तं दिव्यपादपमेकमवलोकयति स्म। तमवलोक्य यावत्ते तं सुचिरं निर्वर्णयन्ति तावत् क्षुत्पिपासार्दितास्तन्मन्त्रिणः प्रधाव्य तद्वृक्षफलानि भोक्तुमारब्धास्तानि एकैव पदपि प्रस्तरमुपगताः। मृगाङ्कदत्तश्च तदानीं तानपश्यन्नतिविह्वलतरो तस्मिन्नेकैकं नामग्राहमाह्वास्त। यदा च न ते प्रतिवचनं ददुर्नापि चालयन्त गात्रम् एतत्तरु-निवासिना भूतेन केनचित्ते भक्षिता इति विचिन्तयन् नैराश्यविधुरः स मूर्च्छितो महीतले न्यपतत्। तं तथाविधमवलोक्य द्रुमानारूढः पार्श्वस्थः श्रुतधिर्द्विजस्त-माश्वास्य तत्क्षणमुवाच–'देव, एवं विवेकोऽपि भवान् परित्यक्तधैर्यं कथमव-सीदति? विविधकर्मसूत्रसम्बद्धो नरः करोतु ( करोति वा ) निजकृतकर्मणां फलं भुङ्क्ते, स्वसंयोगेन वियोगेन वा कं भ्रातरं स्वसारं पितरं वा तत्फलं भोजयति? एतद्बुद्ध्वा यो व्यसने न मुह्यति ( मोहिष्यति, मोग्धा वा ) शास्त्रीयज्ञानानुरूपम् आचरति ( आचरिष्यति, आचरिता वा ) स एव कल्याणं प्राप्नोति ( प्राप्स्यति, प्राप्ता वा ) अतो भागवतानां सम्प्रदायवतां वियोगेऽधिकाधिकं त्वां दुःखा-करोति चेद् धैर्यं बधान। सुहृदोऽपि मन्त्रिणश्चेदागंस्युरत्र ( आगच्छन्ति, आगमिष्यन्ति, आगन्तारो वा ) तर्हि त्वमस्मादुद्यानान्निर्गच्छ। अचिरेणैव समयासन्नानां स्वसखीनां संयोगमेष्यसि।

---

( लकारार्थप्रक्रिया )

१. अभिज्ञावचने लृट्। २. 'न यदि' इति सूत्रेण प्रतिषेधे लङ्। ३. 'विभाषा साकाङ्क्षे'। ४. 'यावत्पुरानिपातयोर्लट्'। ५. विभाषा कदाकर्ह्योः। ६ 'किंवृत्ते लिप्सायाम्'। ७. 'लिप्स्यमानसिद्धौ च' इत्युभाभ्यामुभयत्र भविष्यति लट्। ८. निर्वेगदुःखाकरणं करोत्यर्थस्य धैर्यधारणप्रेरणस्य वचनम्; तेन दुःखाकरणे धैर्य-बन्धनं त्वया कर्तव्यमित्यर्थे 'लोडर्थलक्षणे च' इति लट्। ९. 'लिङ्योर्ध्वमौहूर्तिके'।

एवं श्रुतधिनाऽऽश्वास्यमानोऽपि राजपुत्रस्तच्छुचाऽभिभूत वारयत्यपि श्रुतधौ 'एषोऽहं सरस्यामात्मानमुज्झितुं गच्छामि इति समुत्तस्थौ । एतस्मिन्नेव कालेऽशरीरिणी वागगगनादुद्गता, 'पुत्र, साहसेनालम्, प्राणाँश्चेत्त्व धारयसि सर्वं स्वन्त ते भवति । अस्मिन् हि वृक्षे स्वयं देवो गणपतिर्निवसति । स च त्वत्सचिवैरेतैरथा वमानितो यतो हि अक्षालितकराङ्घ्रयोऽनाचान्ता क्षुधार्त्तास्ते फलानि लिप्सवोऽस्मिन् वृक्षे समारूढा इति फलस्पर्शसमकालमेव, 'यच्चित्ता भवन्तस्तद्गतिं गच्छन्त्विति' विघ्नेशशापाशापा फलता गता । अन्येऽपि येऽद्यावध्यनुपलब्धास्ते चत्वारो मन्त्रिणस्तेऽपि अनेनैव पथाऽऽगता एवमेव वृत्तमिममारुह्य फलत्वमिता । अज्ञानवशाच्च तैस्तथाकृतम् । जानन् हि को नामैव गणपतिमवमानयेत्[3] । त्वं तु मया सचेतीक्रियसेऽतो नाहं सम्भावयामि त्वमपि तथैव भगवन्त गणाधिपमवमानयिष्यसीति त्वरित तपोभिस्त्वं गणनायक सन्तोषयिष्यसि चेच्छीघ्र सिद्धिस्ते भविष्यतीति इति ।

एवमुक्तो मृगाङ्कदत्तो जातास्थो 'गणेशश्चनुग्रह्येत् आशासे मन्त्रिण समुपेयाम्' इति विचारयन् देहत्यागान्निवृत्त सरसि कृतस्नानस्समभ्यर्चिततत्तरुस्थगणनायको निराहार श्रुतधिपरिचरितस्तस्मिँस्तरुतले एकादशदिनानि विघ्नशाराधनमकार्षीत्। द्वादशेऽहनि तुष्टो गणेशो निशि स्वप्ने बभाषे, 'पुत्र, तुष्टस्त्वत्राहमिति योऽय निकटतमपक्ष आगामी तस्य यदवरमादिमसप्ताहात्तन युक्तस्त्वं मुक्तशापान् सर्वान्मन्त्रिण समवाप्स्यसि । तैं सह गत्वोज्जयिन्यामवाप्तशशाङ्कवतीक पुनस्स्वनगरीं प्रत्यागत्य पृथ्वीराज्यञ्च करिष्यसि अतो वीरस्त्वं तद्वियोगखिन्नोऽपि मार्गे धैर्यं त्यजसि जात्वा त्मद्दत्या चिकीर्षसि गर्हितमेतदिति कथ त्वं शूराभिमतमार्गाद्विचलेः ।

एव गणेशादिष्टो मृगाङ्कदत्तो निशात्यये प्रबुद्धस्त स्वप्नादेशं श्रुतधयेऽभ्यधात्। तेनाभिनन्दितश्च प्रात कृतस्नानोऽभ्यर्चितगणनायको यावत्तद्वासवृक्षप्रदक्षिणा कुरुते तावत्तत्तरोरवतीर्य फलत्वमुक्तदशा दशापि तत्सचिवास्तत्पादयोर्निपेतु । स च तेष्वेकैकमधिकाधिकप्रेम्णाऽवलोक्य परिषस्वज । तेऽपि च कृततपसमात्म-

---

१ वर्तमानसामीप्ये वर्तमानवद्वा' । २ 'आशंसाया भूतवच्च' । ३ क्षिप्ते लिङ्लृटौ । ४ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ५ क्षिप्रवचने लृट् । ६ आशंसा वचने लिङ् । ७ 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययो' इति क्रियाप्रबन्धे ( सातत्ये ) भविष्यत्यनद्यतननिषेधे लुड् । ८ 'नानद्यतनवद्०' इति सामीप्ये लुटो निषेधे लृट् । ९ गर्हायां लडपिजात्वो । १० विभाषा कथमि लिङ् च ।

चाहन्येकस्थानोपविष्टाना समापितसान्ध्यविधीना मुनीनामाश्रमे वय तद्दर्शनाय गता । प्रणिपत्योपविष्टाश्च कृतातिथ्यै प्रियवदैस्तैर्महर्षिभि कुतो यूयमिति क्षिप्र पृष्टा । अतस्तेन मुनिकुमारकेण तदाश्रमप्रवेशान्तोऽस्म मत्प्रबद्धो वृत्तान्तस्तेभ्यो विनिवेदित । यच्चाकर्ण्य कण्वाख्यो ज्ञानी मुनिरभापत यदापद्यभग्नधैर्यत्वम्, सम्पदि च निरभिमानिता, सर्वदोत्साहसम्पन्नता चैतत्सत्पुरुषव्रतम् । अतो नाह मवक्लृप्सयामि जातु युष्मादृशा एवमात्मानमवसादययुरिति । महान्तो हि महान्ति कृच्छ्राणि नितधैर्यतोऽविगणयन्त समासादितमहार्था एव महच्छब्दभाजो भवन्ति यत्र नैव स्वकीयमहत्त्व ते परिपालययुराश्चर्यं तत् । ये हि धैर्यधारया दुरुत्तराण्यपि कृच्छ्राणि समुत्तरन्ति त एव स्वाभीप्सितानि प्राप्नुवन्ति । गलितसत्त्वविलुसचे ष्टाश्च नष्टा भवन्तीति नवादत्ता अपि यत्त्वेवमात्मशक्तिमवहेलयेयुरमर्षणीयमेतत् । अतो वैक्लव्यमेतत्परित्यजत । युष्माकमधिपतिर्मृगाङ्कदत्तोऽद्यापि प्राणिति । अतो योऽयमध्वा गन्तव्य श्वा उज्जयिन्यास्तस्य यदवर विन्ध्यशिखरपल्ल्यास्तदभ्यन्तर एव यूय त प्राप्स्यथ । स चापि समवाप्तसर्वसचिवशशाङ्कवतीकोऽश्वमेधयाजी राजा भविता ।

इत्थ तेन महर्षिणोक्ता वयमवलम्बितधृतयो नीततन्निशा, अपि सङ्गमये द्विधिरस्माक प्रभुमिति धिया तत प्रचलिता अध्वखेदखिन्ना क्रमात्काननमेतद वासवन्तोऽशनायोदन्यानिपीडिता फलाना हेतोर्गणनाथवृक्षमेतमधिरुह्य फल व गता अपि त्वत्तपसाऽद्य विमोचिता । अयमेवास्माक चतुर्णां त्वद्वियोगकालवृत्तान्त ।

मृगाङ्कदत्तो निजसचिवाद्व्याघ्रसेनादेत सर्वमाकर्ण्य शशाङ्कवतीलाभस मुपलब्धश्रनिरस्ता निशामनैषीत् । प्रातश्च तस्मादुत्थायाशपै सचिवै श्रुतधिना च युक्तो विघ्नविघातकवृक्ष न वा शशाङ्कवती प्रेप्सुरुज्जयिनीं गन्तु शश्वत्समयस्यत् । मार्गऽनुतर्गेद्धियमानस्फुर-मुञ्जपुञ्जभियोऽभ्यसन्निभानक्वहृदिनीरतटिनी, विचरद्वी ममत्तमातङ्गा, भग्नभुग्नशीचरा, शुद्धा पुष्पवतीरपि च क्रूरसत्त्वाश्रिता, शान्तै मुनिभि, प्रच्छायतरुभोम्यायमानमृगैश्चाश्रिता वनभुव क्रमादतिक्रम्योज्जयिनी- पुर्या सान्निध्यमवाप । तत्र च गन्धवत्या नद्या कृतस्नानो विगताध्वक्लम सानुगो

१ 'जातुयदोर्लिङ्' । २ चिन्ताकरणे च । ३ यद्धायद्योरुपपद्धृयानम् । ४ भविष्यति मर्यादावचनेऽवरस्मिन् । ५ अश्वमेधन यक्ष्यमाण इत्यर्थे धातुसम्बन्धे प्रत्यया' इति नियमेन 'करणे यज' इति भविष्यति णिनि । ६ 'उताप्यो समर्थयोर्लिङ्' । ७ 'हशश्वतोर्लङ् च' ।

कोट्ट गच्छाम । तत्रैव च कैरातो राजा शक्तिरचित आकार्यते । तत एव च सर्वे सम्भूय सिद्धये समुद्योगो विधेय । सम्भावयामि, स्वीकुर्यादेतद्भवान् ।

श्रुतधेरेतत्प्रज्ञापूर्णवाक्यमाकर्ण्य सामात्यो मृगाङ्कदत्तस्तद्वाक्ये श्रदधात् । अन्यद्युश्च घृतोदय, प्रदर्शिताश, विश्वनभोनित्याध्वग मित्र नमस्कृत्य ससचिवो दुर्गपिशाचस्य मातङ्गेन्द्रस्य निकेतन गन्तु समुच्चचाल । तत्र पूर्वं विन्ध्याद्रि मारुह्य दूरतो दक्षिणपार्श्वं च तस्यावरुह्य दन्तिदन्ताजिनचिता भिल्लपल्लीरवलो कयन् कुत्र तस्य मातङ्गाधिपतेरास्पद स्यात् ? कुतश्च वय तज्ज्ञास्याम इति मृगाङ्कदत्तोऽन्तर्दध्यौ । तदैव च मुनिकुमारक एक सम्मुखमायादिति कृता नति सहामात्यस्तमपृच्छत्, 'अपि जानासि त्व मातङ्गभूपतेर्दुर्गपिशाचस्य गृह क्व वर्तते ? त हि वय दिदृक्षव ।' एतदाकर्ण्य स तापसपुत्रक उवाच, 'इतो नातिदूरे वर्तमानस्य विन्ध्यस्य सानुनि करभग्रीवनामा कुटिलदुर्गम कोट्टो वर्तते तत्रैव प्रचण्डविक्रमो दुर्गपिशाचो मातङ्गपतिर्निवसति । स हि धनुर्धराणा लक्ष स्याधिपति । तैर्दस्युभि स द्विषा सार्थं दलयति । महाटवी चैता भुनक्ति । इच्छामि, अनेनैव पथा तेन सङ्गच्छेता भवान् । मुनिकुमारकादेतदाकर्ण्य सानुगो मृगाङ्कदत्तस्तेनैव मार्गेणा वरत क्रमेण च करभग्रीवस्य मातङ्गराजकोट्टस्य भिल्ल-पल्लीसमाकुल निकट प्राप्नोत् । तत्र स इतस्ततो धावतो वर्हिवर्हैभदशनव्या घ्रचर्ममृगामिषान् शबरौघानवलोक्याचिन्तयत्, 'अरण्यवृत्तयो हीमे तिर्यञ्च इव जीवन्ति । तथापीमे दुर्गपिशाच निजप्रभु मुवते । प्रजासु न क्वापि किञ्चि-दराजक वर्तते । निर्बलो हि जीव सबलस्य जीवन न भवेदिति राजशब्दो दैवैर्विनिमित' । एव विचिन्तयन् स यावत्करभग्रीवकोट्टमार्गं विविदिषति तावत्तत्रागतस्य मायावटोश्चारैः समगलेति ते चारास्तस्यागमन मायावटवे न्यवे दयन् । तदाकर्ण्य ससैन्य पुलिन्दराट् तत्रागत्य निकटीभूय परित्यक्ताश्वो राजसूनोस्तस्य पादयो पपात । पृष्टकुशलो राजा चापि सामात्य वाहनारूढ त निजकट्टमनैषीत् । तदागमनशसिन प्रतीहार च शबराधिपो मातङ्गराजाय प्राहिणोत् इ यचिरादेव स्वदेशतो—यथार्थनामा शिलाकूटकठोरशरीरावयव, तरुणोऽपि क्षपिताशेषवया, कृष्णोऽप्यनन्यसेवी, मातङ्गराजोऽपि भूभृत्पादोपजीवी, नूतनजलधर इव मायूरपिच्छचित्रधनुर्धर, हिरण्याक्ष इव वराहक्षतविग्रह,

---

१ 'विभाषाधातौ सम्भावनवचनेऽयदि' । २ इच्छार्थषु लिङ्लोटौ ।

सम्पादिते चैवमशीतपिवतादिक्रिये मृगाङ्कदत्तो मातङ्गराजादीन् निजसुहृदो जगाद—'इदानीं कालहारो व्यर्थ इति मुहूर्तादूर्ध्वमाशूज्जयिनीं गच्छेत् ।' तन्निशम्य श्रुतधिरब्रवीत्, 'देव, नीतिविदामेतन्मतं यद्विजिगीषुणा पूर्वं कार्याकार्यविभागो विधेयः । तत्र च यदुपायनाशक्यं भवेत् तत्सर्वथा परित्यज्येत । एवञ्च सर्वेषु कार्येषु पूर्वं पूर्वो वरः । परः परश्चावरः । अतः पूर्वं सामप्रयोगोऽत्र क्रियतां स्म । यतो हि सर्वैश्वर्यसम्पन्ने कर्मसेने न दानं सिद्धये स्यात् । क्रुद्धलुब्धावमानिता अस्य न सन्तीति भेदोऽप्ययोग्यः । अतिबलाधिके दुर्गस्थेऽनितपूर्वे च तस्मिन्नन्यैर्नृपैः प्रयुक्तो दण्डः संशयावहः । अतः कालोऽयं यत्नेन राज्ञा सह साम एव व्यवहियेत । तेन कार्येऽसिद्धे च दण्डप्रयोगो विधीयतें ।

श्रुतधरेतद्वाक्यमाकर्ण्य सर्वे तत्र श्रद्दधुः । तद्दूरदर्शितां मन्त्रक्रमज्ञताञ्च प्रशशंसुरिति सर्वे परस्परं सम्मन्त्र्य दूतगुणान्वितं किरातराजानुचरं सुविग्रहनामानं दूतं लेखसन्देशं समर्प्य त्वमिमं कार्यभारं वहे औदासीन्यञ्चात्र मा कार्षीः' इत्युक्त्वा भूभृते कर्मसेनाय तं प्राहैर्षयन् । स चोज्जयिनीं गत्वा राजभवनं प्रविश्य सिंहासनारूढं मन्त्रिभिः परिवारितं कर्मसेनं प्रत्यक्षीचकार । निर्दिष्टासनोपविष्टश्च पृष्टकुशलो राज्ञाभिनन्दितो लेखं समार्पयत् । मुद्राक्षेपप्रसारितञ्च यं प्रज्ञाकोपाभिधानो मन्त्री स्पष्टमेनमवाचयत्—

'स्वस्ति श्रीस्वरभग्रीवकोटमूलाम्वीतटाम्महाराजाधिराजस्यायोध्यापुरीपतेः श्रीमतोऽमरदत्तस्य पुत्रः श्रीमान् मृगाङ्कदत्तः उज्जयिन्यां वर्तमानस्य निजवंशपयोधीन्दोर्महाराजकर्मसेनस्य स्फुटमेवं सन्दिशति यत्त्वदीया कन्या दैवतैर्मदीया सदृशी भार्या समादिष्टेति सा मह्यं क्षिप्रं प्रदेया । एवं कृतेऽस्मत्पूर्ववैरभावो विनश्येत् नवीनो बन्धुभावश्च सम्पद्येत । नो चेन्निजभुजावेवैतत्कार्याय प्रार्थयिष्ये ।'

मन्त्रिणा प्रज्ञाकोपेणेत्थं लेखे वाचितेऽतिक्रुद्धो राजा कर्मसेनो जगाद, 'ते हि सर्वदाऽस्मद्विपक्षाः । अनात्मज्ञस्य तस्याभिमानितैतेनापि लक्ष्यते यत्तेन स्वनाम पूर्वमुल्लिखितम् । अवज्ञया चास्माकं परस्तादुल्लिखितम् । अन्ते चात्म बाहुवीर्यं दर्पाध्मातेन तेनोदीरितम् । अतोऽभिमानिने तस्मै मत्प्रतिसन्देशोऽपि

१ लिङ्चोर्ध्वमौहूर्तिके ( कर्मकर्तृरूपम् ) । २ स्मे लोट् । ३ लिङ् यदि । ४ अर्हे कृत्यतृचश्च । ५ शकि लिङ् च । ६ हैरचङीतिसूत्रेऽचङीत्युक्ते कुत्वं न ।

न चोष्य कन्यायास्तु वर्णय केति दूत, त्वं ब्रूहि ब्रूहीति चाहि तव स्वामी धाम परं यन्मुषितमावृण्वता तद् निघ्नेव विधत्स्वेति विधत्ताम्।

राज्ञा धर्मसेनेनेत्थमुक्तो दूत सुविमद अमात्यातमित्थमभाषत—'राजन्, राजपुत्रमपरवर्णयेव रत्नमेयमोजायसे। न सर्वसामान्योऽस्मत्स्वामी। न क्षोदति तस्य यशःशरीरम्। न ज्रूणाति तस्य शक्तिः। नो जूर्यते तस्य भुजबलम्। न जिनाति तस्य तेज। स तेजोभिरेवारिजगदावृणोति। यथार्हधर्मैर्जातीन् वरीत। सर्वत्र सत्कीर्तिं वृणाति। सर्वथा क्षेमं वरयति, प्रवृते च यश। युद्धे निवारयति विद्विष। निवर्तते चानीतिशत्रुभीतिप्रलोपद्रवम्। वशम्वाश्रितानां स गुरुमप्यपराधं मर्षति तथाप्युद्धतानां नृपाणामणुमात्रमप्यनुचितव्यवहारं न मृष्यति। युद्धे स निजरिपुसैन्यप्रक्षिप्तनिशितशरसहस्रैरस्त्ररिपुमात्मनो दरति। विद्विषां स्वभुजदण्डराज्यभूमिं छदति। निजार्थिरिपुगुणनिमित्तपदानां स गुरुत्वेन छादयतीति सेव्यं सुरयुवतिनिगुणा पुण्यवृत्तयस्य समाच्छादयन्ते। अतस्तत्रिम-च्छिद्यते त्वं स्वपरान्तरमवभोत्स्यसे' इति।

सर्वसमक्षमिदं तद्वाक्यममुक्ते वीरे सायम्भुवि, सुपाले चमरं नौरेवार, तस्मिन् पदेऽनिवर्तदेशिके, सरस्येव राजसभा निरनिशयक्षोभमवाप। युद्धो नृपोऽपि दूतमवध्यं ज्ञात्वा नाम्रे विसर्जयध्याम्। अन्ये च तत्रत्या वीरा

---

१–२ 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः', 'यथाविध्यनुप्रयोग पूर्वस्मिन्'। ३ ओजस्वीव आचरति, 'कर्तुः क्यङ् सलोपश्च'। ४ जूष् वयोहानौ दिवादिक। ५ ज्रू वयोहानौ क्र्यादिक ष्यादि। ६ जुर्वी हिंसावयो-हान्यो दिवादिक। ७ ज्या वयोहानौ क्र्यादिक। ८. वृञ् वरणे, स्वादि। ९ वृञ् वरणे स्वादि। १०. वृञ् वरणे क्र्यादि। ११ वर ईप्सायाम्, चुरादिरदन्त। १२. वृञ् वरणे दिवादि। १३. वृङ् सम्भक्तौ क्र्यादि। १४. वृञ् वरणे भ्वादिक उभयपदी। १५ छुर छेदने तुदादि। १६ दिवादि। १७ छद अपवारणे चुरादि। १८ छद आच्छादने भ्वादि। १९ छद ऊर्जने चुरादिरदन्त। २०. छद संवरणे चुरादि। २१ 'अस्मदः ...' वृञ सम्प्रदानादेशः'। २२ 'सभा राजाऽमनुष्यपूर्वा' इत्यत्र राजपर्यायस्यैव ग्रहणान्नपुंसकत्वाभाव।

हमवगे[1] तुभ्यञ्चावितथमभिदधे। एवमुक्त्वा सशपथं सुतामम्बद्धोद्दीप्त[2]स्नेहभावयाऽहमवस्थोचिताहारं कारिता। त्वया सहागत्यैष भ्राता वेगवत्या पराजितस्त्व च रक्षित। अत परं न किञ्चिदहं वेद्मि। बाढ[3]मेतत्किन्तु यन्वैरास्यध्वान्ताक्रान्तस्वान्तापि वेगवतीसिद्धिम् अम्लिष्ट[4]विरिब्ध[5] तद्दैवतवचश्च स्मरन्ती त्वत्प्राप्त्याशासंलग्नान्[6] प्राणान् प्रघृष्टा[7]हं न पर्य्यत्याक्षम् इति महानुभावाया प्रभावत्या प्रभावाद् [8]शत्रुसङ्कटेऽप्यत्र मम प्राणपरित्रा[9]णो मयोपलब्धस्त्वमिदानीम्। तथापि मदीये स्वान्ते क[10]ष्टमेतच्चिन्तया वर्तते यत्प्रभावत्या अनुपस्थितौ तव तद्रूपे विनष्टे काऽऽवयोर्दशा स्यादिति।

इत्थमुद्घुषित[11]वाक्यां मदनमञ्चुका परिसान्त्वयति नरवाहनदत्ते तत्र तिष्ठति, प्रभावत्याश्च स्वपितुर्भवन समे[12]र्णवत्या तदन[13]भ्यर्णतया विनष्टतद्रूपं नरवाहनदत्तं कमपि तत्र स्थितं पारदारिक मत्वैवदा सर्वोऽपि राजकुलपरिजनो भयाद्राजकुलं गत्वा न्यवेदयदिति भयभीता वार-

**नरवाहनदत्तस्य निग्रहः**

यन्तीमपि मदनमञ्चुकामपवार्य स्वबलान्वितो राजा मानसवेगो नरवाहनदत्त पर्य्यविवेष्टत्। तदानीमेव तन्माना पृथिवीदेवी सत्वरं तत्रागत्य राजानमब्रवीत्, 'पुत्र, नायं पारदारिकोऽपि तु परिपीतस्फीत[14]श्रुतसकलशास्त्रकलाकलापक्षीरसागरावगाहनोद्भूतामृत यश श्वेत[15]चीर, दान्त[16], प्रशान्ता[17]ऽऽम्बान्त[18], सर्वदाहृष्टहृ[19]ष्टतनूरुह, विद्याधरैरुचितम

---

१. अवगच्छामि। २ 'श्वीदितो निष्ठायाम्'। ३ 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तम सक्ताविस्पष्टस्वरानायासभृशेषु। ४ म्लिष्टमविस्पष्टम् तद्विरुद्धम्, स्पष्टमित्यर्थ। ५ विरिब्ध स्वरस्तेन स्पष्ट स्वरमित्यर्थं। ६ संलग्नान् प्रसक्तान्, निष्ठा नत्व निपातनात्। ७ 'धृषि शसी वैयात्ये'। ८. 'दृढ स्थूलबलयो'। ९ 'प्रभौ परिवृढ'। १० 'कृच्छ्र गहनयो कष'। ११. 'घुषिरविशब्दने', इत्यनेन अविशब्दने घुष्टा रज्जुरित्यादावेव निषेधेऽत्र शब्देन प्रस्टीकृताभिप्रायार्थे इट। १२ अर्दतिरिह गत्यर्थकस्तेन समर्णवत्यामित्यस्य 'अर्दे सन्निविभ्य' इतीण्निषेधे समागतवत्यामित्यर्थ। १३- 'अभेश्चाविदूर्ये'। १४ 'रुरध्ययने वृत्तम्' (अधीतमित्यर्थ)। १५ 'श्रा पाके' (सुपक्वदुग्धम्?)। १६-१७ वा दान्तशान्त'—। १८. दृप्तमत्वर सघुशाऽऽस्वनाम्। १९. हृषेर्लोमसु।

पवित्रे, वत्सराजात्मजो नरवाहनदत्त इदानीं निजभार्यामुपायात । जामाता चायमस्माकम् इत्येतद्विद्याबलेनाहं सर्वमवगच्छामि । मात्रैवमुक्तः समुपसं पानीमर्दं प्रग्लानस्वेदो, नातिप्रहृष्टो, मानसवेगो जगाद, 'त्वया स्नेहादित [5]इयत मयाऽविदित शत्रुरितीदानीमय निर्दय दित, निशितं शस्त्रैरिष्टतोऽवसितोऽन्धापान[6]मित मच्चादौ पुरो वा निहितं समवलोकित स्यात् ।' एतन्निशम्य जामातृस्नेहतो मात्रा पुनरभिहितम्, वैद्याधरे लोकेऽधर्मो न लभ्यतेऽतोऽत्र विद्याधराणां या धर्मार्था सभा वर्तते तत्प्रधानस्याग्रे प्रसङ्गोऽय समुपस्थापनीय । तेनैव हि य समुचितो निर्णय प्रदेत्तो भवेत्स शोभतेतराम् । मातृप्रत्तोत्तरवच एतद्गिरा गौरवात्तन्मानसवेगेन प्रतिपन्न किन्तु यद्भ्रात न तत्र नेतुमादेशोऽभूत्' इति श्रुनिनलिक्षाधीतैतैःसीतैदशनिपोन्मत्त इव हस्तिजातकुन्ताघातसमसञ्जातामर्षो नरवाहनदत्तस्तोरणस्तम्भमुत्पाट्याऽगणितांस्तत्रत्यान् भृत्यानतर्दीत् । हतस्य चैकस्य हस्तादसिमेकमाकृष्य दिव्यपराक्रम सोऽन्यानपि जघन्यान्निजमन्युवह्निदग्धान्तकभग्धानकार्षीत् । नरवाहनदत्तीयमेतत्पराक्रममवलोक्य मानसवेगो दिव्यया निजविद्यया बद्ध भार्यानुगतश्च त तां सभामनैषीत् इति भेरीमहाशब्दसमाहूता इतस्तत शब्दकारा विद्याधरा सुधर्मायां देवा इव समागत्य सन्निलिता ।

विद्याधरै परिवृतस्तदानी वायुपथो रत्नसिंहासन समुपाविष्ट इति दृष्ट्वा दुष्टो मानसवेगस्तदग्रे स्थित्वेत्यमब्रवीत्, 'मर्त्योऽपि स्वमुरन्त पुरे धार्ष्ट्यविभ्रमकोऽय वध्य' इति । एतन्निशम्य राज्ञा स्वाभियोगे प्रत्युत्तरीतुमुक्त आमुक्तो धीरो नरवाहनदत्त प्रस्तवानुसरमेतत्, 'सा एव सभा यत्र सभ्यो भवत ; स एव च सभ्यो यो धर्मं वदेत्, स एव च धर्मो यत्र सत्य स्यात् ; सत्य च सत्य सत्पदलनिर्गुण प्रतीयेत । अह ह्यत्र मायया बद्धो भूमौ च स्थित । सत्प्रतिवादी मानसवेगश्च मुक्त आसने चोपविष्ट इत्ययमपि वादवारणायशस्यतो, विवादस्तावत्साधनविरह ।

1. 'अपचितश्च'। २ 'प्याय पी'। ३. सोपसर्गस्य प्यादेशो न। ४ 'हादोनिष्ठायाम्'। ५ 'द्यतिस्यतिमास्थामिति किति'। ६ 'शाच्छोरन्यतर स्याम्'। ७ आङ्पूर्वकस्य प्याय, अन्धूधसो (अर्थयो) प्यादेशोऽसोऽत्र अन्धार्पीनेऽन्धकूप मित प्रविस इत्यर्थ। ८. दधातेर्हि'। ९ दा दद्रो'। १० 'अव उपसर्गात'। ११. अनुपूर्वराददाते र्ने 'दस्ति'। १२ धट् धातो 'धुमास्था–इतीत्वम्। १३ वयुदान इत्यस्य र्ने 'जनगनम्जनो सम्हान्ने। १४ अदो अधिस्यंप्तिकिति'।

वायुपथ एतदाकर्ण्य तमपि मोचयित्वा, मानसवेगमपि शिलातलुपावेशयत्। तत सर्वेषु शृण्वत्सु नरवाहनदत्तोऽभ्यधाद् यदनेनाहृत्य समानीता स्वभार्या मदनमञ्चुकामहमत्र प्राप्तवाँश्चेत्तदा कस्य शुद्धान्तो-

नरवाहनदत्तस्य मुक्ति

मया ध्वसित ? अस्या स्वसा चाह वगवत्या मम पत्न्या मदनमञ्चुकाया रूपेणाभ्युपगत्य स्वकीयो भर्त्ता विहितश्चेत्तदा का मे प्रक्षीणचारित्रापराधिता ?

एतत्सर्वमाकर्ण्य राजा वायुपथोऽब्रवीत्, 'भविष्यन्महोदयो महामाय धर्म्यं वदतीति नायमधर्मकलकपङ्केनाङ्कनीय। एवमुक्तोऽपि मानसवेगो मोहान्धोऽ धर्माच्च यदा न्यवर्तत तदा धर्मानुरोधिनस्तस्य सन्नद्ध

मानसवेगस्य परिभव[1] सैनिको महान् सक्षोभ समजायत। तत्रत्यदिव्य कन्यका विलोकयन्नरवाहनदत्तश्चाचकथत् यन्मायां विहाय मया सह युध्यस्व, एकेनैव च प्रहारेण भितायुर्भूत्वा क्षतविक्षत क्षितौ निक्षप्स्ये[2] युद्धकलानिर्णीतस्य[3], नैकदा जन्यनिहतसपत्नासृक्कसरित्प्रतिसर्नीतस्य मम पौरुषज्वालोकस्व। एवमन्योन्यसमुपजातकलहेषु विद्याधरेषु सभान्तरस्था त्सहसैव विशीर्णस्तम्भाद्भैरवव्रपुरञ्जननिभो व्याघ्राम्बरो, विनिह्नुततरणि, विद्युल्ल तातरलप्रदीप्तलोचनार्चि, प्रलयमहामेघ इव देव एक आविर्भूय 'न कथमपि भाविविद्याधरचक्रवर्तिन कुप्रलेऽत्र पराभवे भवदिति' गर्जन्मानसवेगमुत्थाप्या धोमुखीचकार। नरवाहनदत्तञ्चाशु भुजाभ्यामादाय सरक्षणार्थमृष्यमूकपर्वत परिप्लुत प्रापय्य तत्रैव च त स्थापयित्वा तिरोदधौ।

इत्थमपनीते ततो नरवाहनदत्ते शान्ते च विद्याधरसम्भ्रमे वायुपथ स्वैरपरैश्च सहित स्वहर्म्यमानगान। मानसवगोऽपि च हर्षविषादाकुलिता मदनमञ्चुका पुरस्कृत्याषाढपुर प्रत्याजगाम।

सुराद्रु खयोश्च विधिविधानानुकूलमनिर्बाध परिवरिवृतीति। तत्र च

---

१ 'निष्ठायामण्यदर्थे' भियो दीर्घात्'। २ 'वा क्रोशदैन्ययो'। ३ तिनदाम्या स्नाते कौशले'। ४ सत्राथाभावात् 'सूत्र प्रतिष्णातम्' इत्यस्य प्रत्युदाहरणम्। ५–६ विकुशामिपरिभ्य स्थलम्।

भागिनां धीरत्वपरीक्षितिरिति विजयलक्ष्मीमाश्लिष्टः, दिवसेष्वेषु एकोऽपि नरवाहनदत्तस्तैस्तैर्दारैः संयोजितो मुहुर्मुहुर्वियोजितः।

अथैकदा ऋष्यमूकाद्रिमधिष्ठितं तं प्रभावती समागत्योक्तवती यन्ममासन्निधानात्पापं चिकीर्षुणा मानसवेगेन भवान् सभां नीत इत्येतद्विज्ञाय विद्याप्रभावेण भैरवदेवाविर्भावविडम्बनं कृत्वा तत्पापपाशान्मया त्वं मोक्षितो भयादिह समानीतः। एतद्धि समिद्ध-सिद्धक्षेत्रम् इति बलवतां विद्याधराणामपि मते, विदिते, जुष्टे, रक्षिते चात्र गिरौ केषामपि मायाप्रपञ्चो न प्रभवति। ममापि विद्याविभवो नात्र प्रसरतीति कथं त्वमत्र वन्याहारेण वर्त्स्यसीति मे दुःखम्।'

एतदुक्तवत्या प्रभावत्या सह कालं प्रतीक्षमाणो नरवाहनदत्तो मदनमञ्चुकां ध्यायंस्तत्रोवास। तत्पर्वतासन्ने पवित्रे पम्पासरसि सस्नौ। स्वादूनि फलानि मूलानि च पस्पौ। मृगमांसोपदंशश्च तीरतरुपतितैः सरसं सुगन्धि च पयः पपौ। एवं तत्र नियमतो रामाश्रमानालोकयतश्च तस्य मनो विनोदार्थं प्रभावती यत्किंचिद्रामायणवृत्तान्तमवर्णयत् यदिदं मर्मभिर्निर्मितमस्य, रामस्य सौमित्रिणा सह तस्मूले कृतोटजम् आसितम्; इदं तस्य भुक्तम्; इदञ्च यातम् इत्यादि। एवमत्र कतिचिद्दिनानि स्थितो रामोऽब्धिं यद्बुद्ध्या विमानीकृतलङ्केश्वरोऽनेनैव यथा विमानेन जानकीमानिन्ये। एवमेव भवानपीह कञ्चित्कालं स्थित्वा गतो मदनमञ्चुकामवाप्स्यतीत्यादिकथयन्त्या तया सह सञ्जल्पितं सहसितैव नियमपरो नरवाहनदत्तो दिनानि निनाय। ( निष्ठानिर्देशसमाप्तिः )

एकदा धनवत्यजिनावत्यावुभे विद्याधर्यौ—याभ्यां स गन्धर्वपुरात् श्रावस्तीं प्रापितो भगीरथयशसं परिणयतिस्म-द्वितोऽवनीयं पम्पायाः समुपाजग्मतुः। स्वकीयया सख्या प्रभावत्या सह तत्र अजिनावत्या मिलितायां धनवती नरवाहनदत्ताय प्रास्तावीत्, 'एषा अजिनावती प्राक् मया वाचा युष्मभ्यं दत्तेत्यावयोरभ्युदयेनाधुनैषा त्वया परिणेतव्येति'। एतद्धनवतीवाक्यं प्रभावती नरवाहनदत्तश्च सखीस्नेहादनुमुमुदाते इति धनवती यथाविधि वत्सेश्वरायाजिनावतीं ददाना निजविद्याक्लृप्तदिव्यसम्भारं सुतोद्वाहमङ्गलोत्सवं निर्वर्त्यास्मिन्पुनर्नरवाहनदत्तं

---

१–२. 'तत्पर्वताश्रमं हरिलवणीत्वस्तानवगमनदहनोदतिभ्यश्च'। ३. विनिद्रा स्नेहनमोचनयो, 'धीत' रः'। ४. 'वलिपुद्दिरुजार्थेभ्यश्च'। ५–७ सोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य'। ८–९. 'नपुंसके भावे क्तः'। १० सुयजोर्ड्वनिप्।

बभाषे, 'पुत्र, यत्र-तत्र-चिरं स्थातुमसाम्प्रतम्। मायावी हि विद्याधरवर्ग इत्यधुना सभार्यस्त्वं निजपुरीं कौशाम्बीमुपढौकस्व। अहमपि निजसूनुना चण्डसेनेन सह तत्रैवागमिष्यामि। धनवतीत्युक्त्वा दिवमुदयौ। प्रभावत्यजिनावत्यौ च नरवाहनदत्तं नभसा कौशाम्बीं प्रापयामासतुः।

इत्थं कौशाम्ब्या उद्यानेऽवतारितो नरवाहनदत्तस्तत्रत्यैः सर्वैर्जनैरदर्शि। स्पतिभाग्यशालिनो वयं ये दिष्ट्या राजपुत्रं पश्याम इत्थं ब्रुवाणानां यूनां जरतां च समन्ततो महान् कोलाहलः समजनिष्ट। नगरोपकण्ठे समुपनिषेदिवांसं तं शुश्रुवान् वत्सराजश्चाथाकाण्डसुधासारसंसिक्त इव वासवदत्तया, पद्मावत्या, रत्नप्रभादिभिर्वधूभिः, यौगन्धरायणादिभिर्मन्त्रिभिः, कलिङ्गसेनया, गोमुखादिभिश्च सह ग्रीष्मेऽध्वगो ह्रदमिव तमुपेयिवान्। तत्र वत्सेशो देव्यौ च निजसुतं चिराद् ददृशिवांसस्तमालिङ्गयामन्दानन्दं विविदिवांसः समुच्छलदूर्मिवात्सल्यसागरमिव विविशिवांसः हर्षकण्टकिते वङ्गेषु प्रोतमिव तं मोक्तुं न शेकुः। ततो मिलितेषु तेषु सर्वेषु प्रवर्तमाने महोत्सवे, सिद्धविद्याप्रभावतः सर्वमवगत्य मानसवेगस्य स्वसा, नरवाहनदत्तस्य पत्नी वेगवती, व्योममार्गेण तत्रावतीर्य निजपतिश्वश्रूश्वशुरकृतपादानतिर्नरवाहनदत्तं जगाद, 'भवदर्थं दुर्बलीभूताः सर्वा विद्यास्तपोवने साधयित्वा कल्याणिनस्तवान्तिकं पुनरहं प्राप्ता। एतदभिधाय सा प्रभावत्यजिनावत्यौ सख्यावभिगत्य ताभ्यामाश्लिष्टा यावत्ताभ्यां तत्रोपवेश्यते तावदजिनावती माता धनवत्यपि तैस्तैर्विद्याधराधिपैः समाच्छादितव्योमतलैरिव तद्बलैर्युतैः सह तत्राजगाम। ततस्तस्याः सुतो महाभुजो वीरश्चण्डसिंहस्तदनुर्मितगतिः, प्रभावत्या पिता पिङ्गलगान्धारः पूर्वप्रतिपन्नसभापतित्वो वायुपथस्तथा वज्रप्रभेण पुत्रेण सह राजा हेमप्रभो गन्धर्वदत्तया सुतया सहितो गन्धर्वराजस्तथा चित्राङ्गदेन युक्तस्सागरदत्तः, एते सर्वे तत्रोपगताः सपुत्रेण वत्सराजेन च सम्मानिता यथोचितामनेपूपाविशन्।

तत्रैव सर्वेषूपविष्टेषु सत्सु पिङ्गलगान्धारो राजा सदसि तिष्ठन्तं जामातरं नरवाहनदत्तमुवाच, 'दैवादिष्ट स्वचक्रवर्तिन् भवन्तं पश्यन्तोऽतिस्नेहवशात्सर्वे

---

१ 'जीर्यतेरतृन्'। २–३ 'भाषायां सदवसश्रुवः'। ४ उपेयिवाननाश्वाननूचानश्च'। ५–७. विभाषा गमहनविदविशाम्, 'दृशेश्च'। ८–९ 'लट शतृशानचौ०'।

वयमिह समवहिता संमाहयिता । नियतव्रता, दिव्यज्ञानवती, दधानाऽक्षसूत्रम्, वसाना कृष्णाजिनम्, स्वामभिरक्षन्ती सर्वदोषुक्षे । विद्याधरोत्तमवन्दनीया, सिद्धविद्या सावित्री साक्षाद्भगवतीवेयं ते अभ्युदयवतीति त्वदीयकार्यसिद्धौ न सन्देहस्तथापि यदह वच्मि तत्समाकर्णय 'अत्र हिमाचले विद्याधराणां स्थितेर्द्वौ भागौ वर्तेते, उत्तरो दक्षिणश्च । कैलाशादर्वाग्दक्षिण, तत्परतश्चोत्तर । तत्रैषोऽमितगतिरुत्तरभागाधिपत्यार्थमिदानीं तपसुदुश्चरतपा परितोषितेन शङ्करेणोक्तो चक्रवर्तिनरवाहनदत्तस्ते सर्माहितं साधयिष्यतीत्यय तवान्तिकमुपयात । इदानीं तत्रत्यसिंहासने समासीन मन्दरदेवाख्यो दुर्मतिर्मुण्यो राजा वर्तते । स चैवं बलवान् यद्वास्तविद्येनापि त्वया विजेतुमसाध्य । यस्तु दक्षिणभागे गौरिमुण्ड इति विश्रुतो राजा वर्तते सोऽतिदुर्जयो दुरात्मा च । स च विविधमाया विद्वतो, विदितस्य तव शत्रोर्मानसवेगस्य परम सुहृदिति यावत्स साधितस्तावन्न ते कार्यं सेत्स्यति । अतस्त्वमचिरेणैव सोत्कर्षं महाविद्याबलं साधय । विहस्यान्धारेणेत्थमुक्तं धनवत्यप्यनुममुदे । विद्यासिद्ध्यर्थमीश्वराराधनार्थं यथानिर्दिष्ट सिद्धक्षेत्रं गत्वा तत्प्रसादात्प्रकर्षायास्तपसे च समादिष्टो नरवाहनदत्त । एतस्मिन्नेव प्रसङ्गे चित्राङ्गदोऽब्रवीत्, 'देव, मिलिता इमे सर्वे राजानो भवन्तमभिरक्षन्तीति सर्वेषामग्रयायी एष विजय क्रियताम् । ,

इत्थं तैरुक्त- कृतनिश्चयो महाविद्यायत्म कर्मभिर्यैन् नरवाहनदत्तो विहितमाङ्गलिकक्रियोऽमितगतिप्रज्ञाकल्पितोत्तमशिबिकामारुह्य चलत्पान्तपवनोद्धूतमागरामोर्मिनिर्भजलदै परिवृतो नभ स्थगयन् क्षणादेव गन्धर्वपतिविद्याधरेश्वर्धनवत्या च सिद्धक्षेत्रपर्वतमानीयत । तत्र च सिद्धैरादिष्टमतस्तीर्थस्नानमान पर्वमानो हविषा दिवं यजमान, स्थण्डिलमधिशयान, सर्वदा विविधान् भोगान् भुञ्जानोऽप्यदानीं फलैर्वृत्तिं कुर्वाण, स्वानुभावेनैव च तपोविधान् निघ्नन्, व्योमचराधिपतिपरिवृतस्तस्मै सर्वथाकृतरक्षो रक्षोभिरक्षोभितहृदयो दिवानिशमात्मित शङ्कराराधनायारपन्तमतपस्यीत् ।

---

१ इय गतौ, समागता इत्यर्थ । २–३. आत्मनेपदस्यारुद्धानम् । 'भाने मुक्' । ४. क्षणहृतो क्रियाया । ५. 'ईदास' । ६ 'विदे शतुर्वसु' । ७ 'तौ सत्', 'लृट सद्वा' । ८ पूर्वजो शानट्' । ९ 'तारद्धीस्यक्षयोवचन शक्तिषु चानश्' ।

तथा तपस्यन्त तमतिसमुत्सुका पञ्च विद्याधरकन्यका मदनपरवशा मिथ समय चक्रुर्यत् अयमस्माभिर्मिलिताभिर्युगपत्पतिर्वरणीयो विवाहश्चानेन वरणीय इति। यदि चैकामुना सह पृथग्विवाह कुर्यात् तदा सखीद्रोहिणी तामुद्दिश्य शेषाभिरग्निप्रवेशो विधेय। तमवलोक्यैव दिव्यकन्यकासु तासु क्षुभ्यन्तासु, तद्वासितविषयक व्रतं च धारयन्तीषु तत्राकस्मात्तपोवने महोत्पाता प्रादुरभवन्, तथाहि–प्रतिघ्नता शूराणा गतिं बोधयन्निव उच्चैस्तमतरून् मनुन्मूल्यन्महारौद्रो वायुर्ववौ। किमत्र भवेदिति भयादिव भूमिश्चकम्पे, भीतावकाशदानार्थमिवाद्रिसानवोऽस्फुटन्त। हे विद्याधरा प्रभुमस्मु रक्षत! रक्षत!! इति वदद् इवानभ्र नभस्तलं घोरघोषमकरोत्। किन्त्वेव भूतेऽप्युत्पातसम्भ्रमे नरवाहनदत्तोऽर्हन्त[2] भगवन्त त्रिलोचन ध्यायन्निष्कम्प एव तस्थौ। अनिष्टाशङ्किनो गन्धर्वराजविद्याधरेश्वराश्च सावधाना सन्नद्धाश्च [3]द्विपद्भ्यस्तमवन्तोऽवस्थितवन्त। व्याधूतलतातीक्ष्णकोटिखड्गानि वनानि अहितागमशसिन उत्पातान् भर्त्सयन्ति इव सिहनादान् मुमुचु।

अन्येद्युश्चाकस्मात् आकाशे कल्पान्ताम्बुदमेदुर घोरनाद विद्याधरबलमदृश्यत। धनवती च तदानीं स्मृतनिजविद्याबलेन सर्वं विज्ञाय सुन्वद्भिर्जर-

मानसवेग–युद्धम्

ज्झिश्च विजुगुप्स्यमानेन मानसवेगेन सहाय गौरिमुण्ड समायात इत्यभ्यधात्। तदानीमुद्गूर्णविविधायुधान् सर्वान् विद्याधरान् प्रति समानसवेगो गौरिमुण्डोऽभ्यधावत्। क्व मानव। क्व च वय खेचरा इति तद्गृह्णाणा युष्माक दर्पमहमिह क्षणेनैव अपनेतौ भवामीतिवादिन ते निराकरिष्णुश्चित्राङ्गदोऽपि क्रोधादभ्यद्रवत्। गन्धर्वाधीश्वरो राजा सागरदत्तस्तथा प्रचण्डदोर्दण्डो वायुपथ, पिङ्गलगान्धारश्चैते सर्वे विद्याधरेश्वरमहारथा परतेजोऽसहिष्णव सवला सिहा इवाभिगर्जन्तो द्विपदद्विपमनोभीर्ति प्रतन्वन्त समुन्मदिष्णु मानसवेगमभ्यधावन् इति चित्रा इवाद्य सैन्यरेणुघनाकीर्णे, शस्त्रज्वालातडित्वते, निपतदसृगम्बुनि तस्मिन् घोरे समरदुर्दिने सञ्चरिष्णव शोणितासवसम्पूर्णं प्रकीर्णशत्रुशिरोऽर्घं महापानमिव चक्रु। कबन्धमकरसङ्कीर्णा, वहद्दायुधपन्नगा, मिलन्मेदोडिण्डीरा रुधिरापगा

१. इष्वार्यो शत्रुकर्षिणि'। २ 'अर्ह प्रशसायाम्'। ३ द्विपोऽमित्रे'। ४ 'युजो यत्नयोगे'। ५ 'युद्'। ६ 'अलङ्कृन् निराकृन्०—

प्रावर्तन्त । एवं प्रवृत्ते भयानकयुद्धे स्थास्नुना[1] महत्तमन्येन गौरिमुण्डेन स्मृता, पूर्वाराधनसम्प्रीता गौरी विद्या मायाविनेत्रा, त्रिशिखायुधा च सा विभूष्णु-जिष्णून् नरवाहनदत्तीयान् प्रवीरान् अमूमुहत् इति समुपलब्धयशो भूष्णुगौरि-मुण्डः प्रधाव्य त्रस्नु-क्षिप्नु नरवाहनदत्तं बाहुयुद्धायाह्वयत् । द्वन्द्वयुद्धे च नर-वाहनदत्तबाहुविद्धोऽक्षमी, मायावी, तमी, गौरिमुण्डः स्मृतनिजविद्याबलेन तं हन्तुं बाहुभ्यामादाय समुद्ययौ किन्तु धनवतीविद्याबलान्वितं नरवाहनदत्तं हन्तुमशक्नुवन्नुन्मादी सोऽभिपर्वते तं चिक्षेप । द्वेषी[6], मानसवेगोऽपि च निज-द्रोहिणो[7]ऽभ्याघातिनश्च तत्सचिवान् गोमुखादीन् आदाय विकत्थी, समुत्पतिष्णुर-नास्थया दिवं प्रास्थित । एवमुत्क्षिप्तास्ते धनवतीप्रयुक्तया रूपिण्या विद्ययाऽव-तारिता पृथक् पृथग्भूमौ स्थापिता 'विवेकिन' सिद्धार्थं, [9]विलासिनं, शत्रुप्रमा-थिन, प्रमादिपदारुं च निजप्रभुं कुशलिनं भवन्त शीघ्रं प्राप्स्यथ एवमुक्त्वा तिरोदधत्या च तया मृगासमाश्वासिता । एतेनास्माभिर्जितमिति विकत्थी मान-सवेगो गौरिमुण्डो यथागतं तस्मात्प्रदेशात्स्वगृहानगात् । 'नरवाहनदत्त सिद्-धार्थं शीघ्रं समेष्यति, न तस्य किमप्यनिष्टं भावि' इति धनवत्याऽमुद्दीरिते सति विरम्भिणस्ते विप्रलब्धादयोऽपि स्वानि स्थानानि जग्मुः । धनवत्यपि स्वसुतामजिनावतीं सपत्नीभिः सहितामादाय स्वगृहं ययौ ।

इतोऽप्यसूयको, विनाशी च मानसवेगो मदनमञ्चुकामागम्य प्रलपति, 'तव पतिर्युद्धे हत इतीदानीमहमेव ते गतिरतस्त्वं मां भज' । एवमुक्ता सा तत्पुरस्थायिन्यपि तत्परिवादका[12] इत्यमुवाच, 'सत्यपि तव [13]निन्दकेषु देवसुरक्षितस्य तस्य हिंसको[14] न कोऽपि समुदपद्यतेति नूनं स एव ते विनाशक[15] इति' ।

---

१. 'ग्लाजिस्थश्च ग्स्नुः' । २. 'स्थानीति' सूत्रे चकाराद् भुवोऽपि ग्स्नुः । ३ 'त्रसिगृधिधृषिक्षिपेः क्नुः' । ४. 'शमित्यष्टाभ्यो घिनुण्', नोदात्तोपदेशस्येति वृद्धिनिषेधः । ५ उपपूर्वान्मदेः अलंकृञादिसूत्रेण इष्णुचुञो 'वा मरुतोऽग्रि-याम्' इति घिनुणपि । ६–८. सम्पृचानुरुधाङ्'— ९ 'वौ कषलसकत्थस्रम्भः' विकत्थीत्यर्थः । १०. 'अपे च लषः' अत्र चकाराद्घिनुणपि, विशेषेण लोभातिशय-मित्यर्थः । ११. 'प्रे लपसृद्रुमथवदवसः' । १२–१५ 'निन्दहिंसक्लिशखादविना-शपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्' ।

इतो नरवाहनदत्त तच्छत्रुणा वह्निपर्वते क्षिप्यमाण कश्चिद्दिव्य पुमान् तत्राग्रहीत्, रक्षित्वा च त मन्दाकिनीतट निनाय। तत्र स नरवाहनदत्तेन 'को भवान्' इति पृष्टो जगाद,'देव, भवेन भवद्रक्षणार्थमिह प्रेषितोऽमृतप्रभनामा विद्याधराधिपोऽहम्। त्वदग्रे चाय तन्निवास कैलासाद्रि। अत्र समाराधितशिवस्त्व शिव निर्विघ्नमवाप्स्यसीति एहि, तत्र त्वा नयामीति तत्क्षणमेव त तत्र प्रापय्य तमामन्त्र्य च यथागतमगमत्। सम्प्राप्तकैलासो नरवाहनदत्तोऽपि च तत्राग्रस्थतप सन्तोषितगणपत्यवाप्ताभ्यनुज्ञो गिरिजापतेराश्रम प्रविश्य नियमक्षामो द्वारस्थ नन्दिन ददर्श। कृतप्रदक्षिण चैन स्वकीयोत्कण्ठासदयो नन्दीत्थमभ्यनन्दयत्, 'सिद्धकल्पस्त्वमिदानी सञ्जात। अधुना ते विघ्ना प्रशान्ता इतीहस्थस्त्वमाभगवत्तोषणात्तपस्यति'। नन्दिनेत्थमुक्तो नरवाहनदत्तो देव शङ्कर देवी पार्वतीञ्च ध्यायन्ननिलाशन उग्र तपश्चकार। तेनातितुष्टो भगवान् भवो भगवत्या पार्वत्या सह दत्तदर्शन प्रह्व तमेवमादिशत् 'वत्स, प्रीतोऽस्मि ते। सर्वविद्याधराणा चक्रवर्ती, निराक्रोशक[1] कदर्य कम्पन[2], निजानुजीविजनानन्दवर्धनश्च[3] त्वमधुनैधि। सर्वातिशायिन्य सवा विद्या, विद्यावर्धनस्य[4] विद्याधरमण्डनस्य[5] च ते प्रादुष्यु। अस्म प्रभावाच्छत्रुगा दमायिता[7] निषूदिता च भूया। शत्रुशस्त्रैरच्छेद्योऽभेद्यश्च त्व रणे चङ्क्रमणान्[8] स्थायुकोऽखिलान्[9] घातकरिपून् घातुको[10] भव। शत्रुशक्तिसम्पत्तिलुण्टाके[11][12] त्वयि दृष्टे निजौन प्रजल्पाका, कापुरुषकुट्टाका वराका शत्रवस्त्वच्छरणभिक्षाका भवन्तु। [13]अभ्यर्थिनो, जयिनश्च[14] ते विपक्षिणा क्षयिष्णो विद्या न तवशिष्यन्ते। गौरी विद्या चापि त्वदायत्ता भविष्यति'। गौर्या सह तस्मै वरमित्थ दत्वा ब्रह्मनिर्मित प्र[15]नविन चक्रवर्तिमहापद्मवि[16]मान,दया[17]लुर्निजभक्त

नरवाहनदत्तस्य वर-सहायकाप्राप्ति

---

१ 'देविकुशोश्चोपसर्गे'। २ 'चलनशब्दार्थादकर्मकाद्युच्'। ३ 'अनुदात्तेतश्च हलादे'। ४ 'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपद'। ५ 'क्रुधमण्डार्थेभ्यश्च'। ६ 'उपसर्गप्रादुर्भ्यामस्तिर्यच्पर'। ७ दमायीविधूनने, 'न य' इतिनिषेधाद्युच। ८ 'सूददीपदीक्षश्च'। ९ 'जुचङ्क्रम्य'। १०–११ 'लषपतपदस्था०' इत्यादिना उकञ् 'नलोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेध। १२ 'जल्पभिक्षकुट्टलुण्टवृड षाकन्'। १३–१४ 'निदक्षिवि०' इत्यादिना इनि १५ 'प्रजोरिनि'। १६ पुनपुसकोभयलिंगता। १७ 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' (आद्यास्त्रयश्चुराद्यदन्ता)।

जनहृंसानुहरो विजयस्पृहयालवे श्रद्धालवे तस्मै प्रददे । ततः 'किमादिशामी'ति तदाज्ञागृहयालव इव सविमहाः सर्वा विद्यास्तस्याविरभूवन् ।

इत्थं नरवाहनदत्तोऽवाप्तसिद्धिवरो, निजविजयनिःसंशयालुः परमेश्वरौ प्रणम्य तदभ्यनुज्ञातो दिव्यं पद्मविमानमधिरुह्य सिद्धचारणोद्गीतामितगीतः प्रथममसित-गतेर्ऋषभपुरसंज्ञं पुरमागतवान् इति तत्र सद्गु रमितगति स्वनिवेशं तं सन्निवेश्य, कृतातिथ्याय वर्णितनिजसिद्धये च तस्मै कृतप्रणतिर्दाररपि नरवाहनदत्तोपायनी-कृतसुलोचनाख्यस्वसुतो दारतामन्वभजत् । नरवाहनदत्तोऽपि चापरविद्याधर-लक्ष्मीमिव प्रेमपाशमेदुरां तामवाप्य मधुर्धाहस्तदहस्तत्रैवानैषीत् ।

अपरेद्युर्वर्धमानपुरीयास्थानवर्तिनं नृपचक्रवर्तिनं नरवाहनदत्तमभ्यन्तरतलादुपनीय आश्वमैरः, भार्मुरकार्तस्वरमयगोंग्गीपपरिवेष्टितशिरोभागोऽभङ्गुर-मेदुरचंग्रकरः, विदुर इव राजकुलनीतिविदुरः, एकः पुमान् बद्धाञ्जलिरेवं व्यजिज्ञपत्, 'देव, अहं समागतः पौररचितद्वाःस्थश्रेणीनिप्रतीहारो त्रिन्वरेस्य श्रीमतः सेवार्थमिह आगतवान्' । एतदाकर्ण्य सर्वं तत्त्वशास्त्रहृष्टो नरवाहनदत्तोऽमितगतेर्मुखमैक्षत । तेन च देव, सत्यमेतदिति विज्ञप्तस्तं स्वपदप्रत्ये न्ययोजयत् ।

अथ विद्याप्रभावतः सर्वदूतसमाहूतस्य वेगवत्यादिभिस्तत्पत्नीभिः सह धन-वती, निर्जीदार्यस्तत्योपिनासगित-यार्जेयूकः, स्वानुभावास्तारितनिजदुर्दरदगूढ, तत्सुतश्चण्डसिंहश्च, दीर्घप्रेमायोऽपि विनतो वायुपथान्वितो राजा पिङ्गलगान्धारः, क्रमेण सागरदत्तेन रसेरानर्नभप्रभादिभिश्च सह चित्राङ्गद एते सर्वे समागत्य चक्रवर्तिनस्तस्य पादयोर्निपेतुः । सोऽपि च श्वशुरौ राद्दत्तपामराणौ प्रणम्य समागतमसंशुभैशंशुः स्वागतेन सर्वान् सम्मानयामास । धनवती चापि जामा-तृशुभोदर्कसिद्धयै शीभिरतमरञ्जयत् । ततो विद्यापिनाम्नसिद्धिहृणाल्लाग्ने चण्ड-

---

१. 'कृशो त्यानीति 'मृगव्यादयश्च' इत्यौणादिकप्रत्यये साधु । २. 'शीडो वाच्य.' । ३. 'दायेट्मिसदसदोऽः सद्गुः गिरन इत्यर्थः । ४ दारः काष्ठम् ( दारशब्दः पुंनपुंसकोभयलिङ्गः ) दाता च, तेन दारभिव, न वर्णोऽभ्यो-दारदाता यस्मादेवं भूतोऽपि वा दानृतामन्वभजदित्यर्थः । ५. शिञ् बन्धने । ६. धेट् पाने । ७. 'सृघस्यदः क्मरच्' । ८. भञ्जभासमिदो घुरच्' । ९ 'विदिभिदिच्छिदेः कुरच्' । १०. इण्नशजिसर्तिभ्यः क्वरप्' । ११ 'गत्वरश्च' । १२ 'जागुरूक' । १३. 'यजजपदशां यङ' । १४. 'नमिकम्पिस्म्यजसकम-हिंसदीपो र.' । १५. 'सनाशंसभिक्ष उ.' । १६. 'विन्दुरिच्छु' ।

सिंहादय सर्वे नितरा प्रमुमुदिरे। पार्श्वोपसर्पितपत्नीकेन चक्रवर्तिना च 'मदीयास्ते सचिवा क्व वर्तन्ते' इति पृष्टा धनवती 'मानसवेगेन क्षिप्तास्ते मया सुसरक्ष्य विद्याप्रभावेण पृथक् पृथक् स्थापिता इत्यभिदधिम्त पर्यतोषयत्। ततो वत्सेशसुतो रूपिणीं विद्यामादिश्य तान् सर्वानानाययत्। तत्र समाजग्मीन्, पृष्टकुशलान् पादानेर्थ्थ तान् सर्वान् 'विभिन्नपरिस्थितिपतितिनिरगणितसुहृदु खमामहिभिर्भवद्भिरियन्तो दिवसा कातिवाहिता इत्येकैकं पृच्छन् वक्तु चादिशत् इति गोमुख आदावेव निजकथा वक्तुमारभत—

'देव, तदानीं द्विपा मानसवेगेन क्षिप्त मा कापि देवी हस्तयोर्गृहीत्वा समाश्वास्य च दूरेऽरण्ये स्थापयन्ती तिरोदधे। तदानीमतिदु खितोऽहमापातत-स्तूर्णक प्रपातत स्वदेह परित्यक्तु धृणगभवम्। तच्चावलोक्य कोऽपि तापसस्त दानीमुपेत्य 'गोमुख, मैवम्, सिद्धार्थं वन्दारुजनमन्दार स्वप्रभु त्व पुनर्द्रक्ष्यसि' इत्युक्त्वा न्यवारयत्, कस्त्व कथञ्च तद्वेत्सीति पृष्टश्च स शिवचेत्र स्वकीयाश्रम मा नीत्वा कृतातिथ्योऽब्रवीत्, 'कुण्डिनाख्यपुरीयो नागस्वामी नामा द्विजोऽहम् पितरि स्वर्गते तत पाटलिपुत्रक गत्वा विद्योपादानार्थं जयदत्तमुपाध्यायमुपासदम्। किन्तु शिक्षयमाणोऽपि न यदाहमक्षरमप्यविद तदा सर्वे छात्रा मामुपाहसन्नित्यवमानग्रस्तोऽह विन्ध्यवासिनीं प्रस्थितो मध्येमार्ग वक्रोल्काभिध पुरं प्रापम्। तत्र च भिक्षार्थं प्रविष्टाय मह्यमेका गृहिणी गृहादेकस्माच्छ्रिया सहैकं रक्तकमल प्रादात्। तद्गृहीत्वा यावदहमपरं गृह प्राप्नोमि तावन्मामवलोक्य तत्रत्या गेहिनी, 'हा धिक्' भवान् योगिन्या विप्रलम्भितो यतो हि तया रक्ताब्जव्याजेन तुभ्य नरहस्तोऽय प्रदत्त इति पश्येत्थमदर्शयत्। एतदाकर्ण्य यावदह वीक्षे तावच्च तदम्बुजमपि तु नरपाणिरेवेत्यतिभीरहं तत्यक्त्वा त पादयो पतित्वा 'मात, तथा कुरु यथाह प्राणिमीति तामवोचम्। तन्निशम्य सा मामादिशत् 'इतो योजनत्रय गच्छ। तत्र करभके ग्रामे देवरक्षितनामा द्विजोऽस्ति। तस्य गेहे साक्षात्सुरभिरुत्तमा कपिला वर्तते साऽद्य शरणं प्राप्त त्वामस्या निशायामवश्य रक्षिष्यति। तयेत्थमुक्तो भीलुकोऽह तस्माद्धावन् दिनक्षये करभग्रामे तस्य द्विजन्मनो गेह प्राप्य प्रविष्टस्तत्र कपिलामवलोक्य कृतप्रणामो

---

१-२ 'आदगमहनजन'–इत्यत्र 'भापाया धाञ् कृसृगमिजनिनमिभ्य'। ३ 'सासहिवावहिचाचलिपापतीनामुपसंख्यानम्'। ४ स्वपिनृपोर्नजिङ्'। ५ 'शवन्धोरारु'। ६-७–'भिय' क्रुकुलुकनौ'।

यावदेव देवि, भीतभीतोऽहं तव शरणं प्राप्तोऽस्मीत्यवोचम् तावदेवान्याभिः सह तर्जयन्ती सा योगिनी मन्मांसरुधिरार्थिनी नभोमार्गेण तत्रागात्। तामवलोक्य स्थावर-जङ्गम-रक्षणेश्वरी सा कपिला निजखुरमध्ये मां सन्निवेश्याखिलां निशां ताभिर्योगिनीभिर्युध्वा मामरक्षत्। प्रातस्तु सा तासु गतासु कपिला मामवोचत्, 'पुत्र, अथाहं त्वामभिरक्षितुं न शक्नोमीतोऽतः पञ्चयोजन्यामेकस्मिन्नरण्यस्थनि-वाल्येऽधुना भूतशिवो नामोत्तमो योगवरानुगामी शैवो यतते सोऽप्येकां रात्रिं शरणागतं त्वां रक्षिष्यतीति तां नमस्कृत्य ततः प्रस्थितोऽहं समवाप्तभूतशिवः समाश्रिततच्चरणोऽतिष्ठम्। रात्रौ च तत्रापि ता योगिन्यस्तथैवागमन्निति सोऽन्तर्गृहे मां प्रवेश्य त्रिशूलहस्तो द्वारस्थो योगिनीर्निरभर्त्सयत् ताः सर्वा जिम्हा च मामाशिषत्। प्रातश्च सोऽपि मामन्वधात् यदहमतः परं पुनस्त्वा-मभिरक्षितुमहं न शक्नोमीतीतो दशसु योजनेषु सन्ध्यावासाख्ये ग्रामे वसुमति-नामा विप्रोऽस्ति तदन्तिकं त्वं व्रज। तत्र तेन तृतीयस्यामस्यां निशि सुरक्षितो मुक्तो भविष्यसि। इत्थं तेनोक्तो विहिततत्प्रणामस्ततोऽनुप्रस्थितः कियत्यध्वनो ऽर्धासन्ध्यायामनवाप्तस्यैव मे मध्येऽध्वं सूर्योऽस्तं गत इति नवं शूहतः समुदितास्ता योगिन्यो मामागत्यास्माद्विषद्रुद्रुत्या यावत्समुत्थाप्य विहायसा यान्ति तावत्तासां पुरोऽन्या अपूर्वा योगिन्यः परापतन्निति ताभिस्सह तासाम-पूर्वोद्भूते युद्धे सम्प्रवृत्ते तासां हस्तादस्मिन्नतिनिर्जने देशे पतितस्तत्रापादमूल-द्वारेण 'प्रविश' इति अत्र प्रवेशं ददर्शैकं महामन्दिरमपश्यम्। दृष्ट्वा च पलायमानस्तत्र प्रविश्य नारीशतसमावृतामद्भुताकारां प्रभया प्रदीपमज्वलितां मदनुकम्पया सृष्टां महौषधिमिव मुग्धदृष्टिमेकां नारीमपश्यम्। समाश्वसितेन च मया पृष्टा साऽभाषत यदहं मुनिश्रेष्ठस्य पत्नी तापावेशमिह स्थिता पौं। मदीयशापशान्तये च मानुष सह समादिष्ट हस्पनाडिकामतास्त्वं मां भावय। एतच्छ्रुत्वा सा क्षिप्रं मानुषायैस्याशाविनाभिर्दीर्घं भिर्वेग्राहारपानैरावारयदिति तया पत्न्या सह ससुखं कतिचिद् दिनानि तत्राहमागमम्।

---

१. 'मुहूर्तमपि वाच्य'। २. 'स्पैशाभावविरहतो' परम्। ३. 'दश दश'। ४ 'तावत्पूर्यमूर्ये०'। ५. 'श्राणमाणपूर्विवदुनोऽसि०'। ६. कन्दे-सोऽपि रसयते' इत्यत्र दशिमहयं विपन्नरोपसंप्रहार्थम्। तेनात्र दृ भवेऽस्मात् लिपि धातोर्हिंगं इत्यत्र। ७. क्रिवधविप्रचयापगतरुक्मुत्र्थीणां दापोऽसत्प्रमाणस्य।

एकदा सा स्वैरं मामित्थमब्रवीत् यदिदानीं क्षीणशापाऽहमितो व्रजामि । मत्प्रसादाच्च समवाप्तदिव्यज्ञान , प्रधी , सिद्धभोगो निर्भयस्तपस्वी त्व भविष्यसि । इहस्थ किन्तु त्व मध्यम पुर मा द्राक्षी । एवमुक्त्वा तिरोभूताया तस्या समुत्पन्नकौतुकोऽह मध्यम पुरमारूढस्तुरङ्गममेकमदर्शम् । तदभ्यर्णं चरणितश्चाश्वेन तेन खुरेणाभ्याहत क्षणादस्मिन् शिवालये स्थितमात्मानमपश्यम् । तत प्रभृत्यत्रैव स्थितोऽहं क्रमात्सिद्धिं गत इति मनुष्यस्यापि मे अंगतस्त्रिकालज्ञान वर्तते । सिद्धयश्च सर्वस्यापि क्लेशबहुला इति त्वमिहास्स्व सर्वप्रतिभू[3], विभु[4], शम्भुस्तवाप्यभीष्टसिद्धिं विधास्यतीति ।

ज्ञानिनेत्थमुक्तोऽहं त्वत्पादप्राप्तिसञ्जातास्थस्तदाश्रमे एतावन्ति दिनान्यनैषम् । स्वप्ननिर्दिष्टभावत्कसिद्धिश्चाद्य धं[6]म्यव कयाचिदिन्द्रिया स्त्रिया गृहीत्वाऽहमिहानीत इत्येष, देव, मदीयो वृत्तान्त ' ।

एवमुक्त्वा तूष्णींकामासीने गोमुखे नरवाहनदत्ताग्रे मरुभूतिरवोचत् , 'मानसवेगेन तदानीं क्षिप्त मा कापि देवता निजपाणिभ्यामादाय दूरे चाटव्या विन्यस्य तिरोऽभवत् । अतिदुःखार्तस्तत्राह मरणोपायचिन्तया भ्राम्यन्नदीपरिक्षिप्तमाश्रममेकमवलोकितवान् । तत्र च गत्वा त प्रविश्याह शिलातले समुपविष्ट ज्वलदेव जटाल तापसमेकमवलोक्य तमुपागत कृतनतिर्विहितत[7]त्स्तोत्रं कस्त्वम् कथञ्चेमाममानुषीं भूमि दिव्यपदरहितोऽप्यायात इति तेन पृष्ट सर्वं तस्मायवर्णयम् । तच्चाकर्ण्य, 'मुध स त्व मा मानमधीरोऽधीरिव वधी । प्रभोर्वार्त्तां त्व ज्ञास्यसि । नन परं यत्कर्त्तुं क्षम स्यात् तत्त्वया करणीय'मित्युवाच । एवं भाव्यस्य वार्त्ताजिज्ञासया तत्र मयि स्थिते ता नदीं स्नातु दिव्या स्त्रिय समाजग्मुरिति तापसो मामवदत् यत्तासा स्नान्त्या एकस्यास्तटस्थापितवस्त्रमानय । तेन च त्व प्रभोर्वार्त्तां ज्ञास्यसि । तच्छ्रुत्वाऽह तथैवाकार्षम् । हतवसना च सा शरीरविपत्तोन्नमना मामन्वगात् नरवाहनदत्तस्य वार्त्तामादाय 'निजवाससी गृहाणेति' तापसेनोक्ता चावोचत् , 'नरवाहनदत्तो ह्यद्य हरमाराधयन् कलासपर्वते वर्त्ते

१ 'ध्यायते सम्प्रसारणञ्च' । २ 'द्युतिगमिजुहोतीनां द्वे च' । ३. 'भुव सञ्ज्ञान्तरयो' । ४ 'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्' । ५. 'मितद्र्वादिभ्य उपसंख्यानम्' । ६ 'ध कर्मणि ष्ट्रन्' । ७ 'दाम्नीशसयुयुजस्तुतुद॰'–इति ष्ट्रन् 'तितुत्रतथ'–इतीडभाव ।

कपिपयैरेव च दिवसैः स विद्याधरसम्राड् भविष्यति। इत्थं तत्कथसस्तवास्य वनिता विमुक्तशापा दिव्या भार्या समपद्यत। तया साकं च सा तापसस्तस्थौ। अहमपि च चिन्ताविरतकथनसञ्जातत्व समागमास्थस्तत्रैव न्यवसम्।

गतेषु कपिपयदिवसेषु सगर्भा सा दिव्या स्त्री भ्रूणं प्रसूयावोचत् 'आर्य, त्वत्सङ्गया मम शापः शान्तः। पुनरपि मत्प्रेप्सा चेत्तदा तण्डुलैः सहैतन्मम गर्भं ध्मात्वा श्मशाने समश्नान। एवमुक्त्वा प्रयाताया तस्या स तापसस्तत् एतुत् तद्गर्भं ध्मात्वा प्लात्वा च खमुत्पत्यैनामन्वगात्। अहमपि च सर्वदुलालि स्वल्पविन्नं स्वस्तिमवित्र, पवित्रं सिद्धसिक्थं तद्विज्ञाय पाकभाण्डाद्भक्तमिस्थद्वय मभक्षयमिति यत्राहमष्ठीव तत्रैव काञ्चनं समनायत। एवं कुर्वन्नहं भ्राम्यन्नेकं पुरं प्रापम्। तत्र च वेश्यागृहे निवसतो मे एका कुट्टनी छलाद्वमनं कारितवतीति वमतो मे मुखाद् भास्वत्पद्मरागनिभे उभे प्राग्भुक्तसिक्थे निरगच्छताम्। निर्गते एव च ते कुट्टन्या तयोपात्ते भक्षिते चेत्यतेन नष्टा मदीया हमसिद्धिं सा कुट्टनी अगृह्णात्। तेनातिग्लानोऽप्यहं सर्वं तच्चन्द्रार्धशिखरस्य शिवस्य विधानमवधार्य पारस्याकूपारस्येव ससारस्यास्यापरिमितं बहुच्छल च विचायातितिविग्न प्रा सये तपसा देवीमाराधयितुं चण्डिकागृहमागच्छम्।' त्रिरात्रोपोषितं च सा स्वप्ने देवी मामादिशत् यत्त्वदीयः स्वामी सिद्धकामः सनात इति गत्वा तं पश्य। तदाकर्ण्य प्रबुद्धोऽहं प्रातः कयाचिद्देव्येह त्वत्पादमूलमानीतः। एतावती, देव मदीया कथा'। ( पूर्वकृदन्तसमाप्ति )

इत्थं कुट्टनीविडम्बनरूपं सौधोर्महभूतेर्वृत्तमाकर्ण्य शत्रुतरून्मूलनवीयूनं स्वलो नरवाहनदत्तः सपार्श्वगो जहास। हरिशिखश्च ततः इत्थमात्मीयां कथां वक्तुम् आरभत—'भीष्मेण शत्रुणा मानसवगेन तथा

उत्तरकृदन्तप्रत्यया

ग्रास्त मामेका देवता समादायोज्जयिन्यामेत्र सुरक्षित न्यधात्। तत्र चाहमतिदु खितो निशागमे देहं त्यक्तुमिच्छन् श्मशाने काष्ठैश्चितामारचयम्। तत्राग्निं प्रज्वाल्य पूरयन्तं मामागानिर्नमस्यर्थं

---

१ अर्तिलूधूसुखनसहचर इत्र'। २ पुव सञ्ज्ञायाम्'।

( पूर्वकृदन्त-समाप्ति )

॥ उत्तरकृदन्तप्रत्यया ॥

३-४ 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्'। ५ भीमादयोऽपादाने। ६ 'समानकर्तृकेषु तुमुन्'। ७ 'भविष्यति गम्यादय''।

ईतु[1] पर्य्याप्तस्तालजङ्घनामा भूताधिपतिरभ्यधात्, 'मा वह्नि प्रवेष्टु[2] धृष्णुहि । नैष कालस्ते मर्तुम्[3] । तव प्रभुरद्यापि प्राणिति । अत पूर्णसिद्धिकाम त द्रष्टुं[4] त्व नून प्राणान् धारयेति' । तेनेत्थ मरणान्निवारितोऽह तव सयोगाय[5] देवाग्रे तपस्यन् स्थित कयाचिद्देवतयेहानीत ।

**मानसवेगगौरिमुण्डवध**

हरिशिखेनेत्थमात्मकथायामुक्तायामन्यैरपि चोपवर्णितेषु क्रमादात्मवृत्तान्तेषु, नरवाहनदत्तोऽमितमतेगिरा धनवती प्रेर्य सदभ्यस्तेभ्यस्स्वसचिवेभ्य सर्वा विद्या अदीदपदिति सर्वेष्वपि तेषु विद्याधरीभूतेषु 'अधुना स्वशत्रून् परागित्यास्माक प्रमोददायी[6] भव' एव शुभेऽहनि धनवत्योक्तो नरवाहनदत्त शिरोदाम[7]मिव शत्रुसार सद्योऽपसारयितु गोविन्दकूटस्थ, गौरिमुण्डपुर प्रति स्वबलप्रयाणारम्भ[8]मादिशत् । अत [9]स्फारीभवच्छत्रार्कं विद्याधरबलमकालोदितशत्रुविनाशकधूमकेतुनीकाशमाकाश समच्छादयत् । नरवाहनदत्तोऽपि च शत्रुसहाहन[11]स्यदापर्श[12]नशालिनीं स्वकीयरेणुकामारुह्य, सर्वाश्च स्वभार्या वह्येषु सनारोह्य, चण्डसिंहादिषु च पुर सरेषु नभसा विजयाय प्रतिष्ठमानोऽध्वनि धनवतीं निर्वेतमासाद्य स्वीकृततद्वचो मातङ्गपुरादाहवाह्वाय विद्याधरेशयगौरिमुण्डमानसवेगयो एक दूत व्यसर्जयत् । अन्येद्युश्च सर्वान् दारान्[13] मातङ्गपुरे सस्थाप्य दिव्यै राजभि सह गोविन्दकूट सम्यगभ्यपेनयत् । तत्र च प्रतिभटक्रोधैधाय[14] निर्गतौ गौरिमुण्डमानसवेगौ, चण्डसिंहादयोऽग्रत प्रत्यगृह्णन् । प्रवृत्ते चोभयत सगररागरक्ते[15] सङ्ग्रामे, पतत्सुभटपादप, स्रवद्रुधिरनिर्झर स गोविन्दकूटाद्रि शुशुभे । शूराणा जागरिताम्बर आहवकालो रक्तार्द्र विलसत्खड्गलताजिह्वो जृम्भते स्मेति रणे एव दुर्जननिचाय[17]मिव सम्मुखागत मानसवेग स्वयमेव युद्धविशोपाध्यायो[18] नरवाहन

---

१ 'पर्याप्तिवचनेष्वलमर्थेषु' । २ 'शकधृषज्ञाग्ला' इति तुमुन् । ३ 'काल समयवेलासु तुमुन्' । ४ तुमुन् ण्वुलौ क्रियाया क्रियार्थायाम्' । ५ 'भाववचनाश्च' । ६ अण् कर्मणि च । ७ 'पदरुजविशस्पृशो घञ्' । ८ 'सृस्थिरे' । ९ 'भावे' । १० स्फुरतिस्फुलत्यो र्घञि' इत्याकार । ११ 'स्यदो जवे' । १२ घञि 'नोदात्तोपदेश' इति न वृद्धि । १३ 'दारजारौ कर्त्तरि णिलुक् च' । १४ 'अवोदैधौद्मप्रश्रथहिमश्रथा' (क्रोधवर्धनायेति भाव)। १५ 'अकर्तरि च कारके सज्ञायाम्', 'घञि च भावकरणयो' । १६ 'अवोदैधौद्म०' । १७ 'परिमाणाख्याया सर्वेभ्य' दुर्जनराशिमिवेत्यर्थे राशयेकत्वेन समुदायिना परिच्छित्तिर्गम्यतेऽतश्चिनोते परिमाणाख्यायां घञ् । १८ 'इडश्च' ।

दत्तोऽभ्युत्पत्य तत्क्षणमेव च भग्नशिरस्त्राणं केशेषु समाकृष्य पाप्मनस्तस्याकृतनीशारं[1] शिरोऽसिना चिच्छेद। तद् दृष्ट्वा प्रकुपितमुच्चैः कृतगरो[2]वं प्रधावितं च गौरिमुण्डं केशेष्वाकृष्य गृहीततदङ्घ्रियुग्मोऽभ्रे भ्रामयित्वा शिलायां पातयन्ननुबन्धमिव तमभिनिष्टा[3]नतामनयत्।

एवं गौरिमुण्डमानसवेगयोर्हतयोराश्रितसद्रा[4]वे च शेषे भीते तद्बले, गगनस्थाः सर्वे सुराः साधु साध्विति ब्रुवन्तो विद्याधरधाय[5]स्य चक्रवर्तिनस्तस्योपरि पुष्पवृष्टिं कुर्वन्तो निजसमदभावं प्रकटीकृतवन्तः। इत्थं निजविजय-

मदनमञ्चुकायामि विश्राव[6]गौरवमनुभवन्नरवाहनदत्तस्तैस्तैः स्वकीयोन्ना[7]यसहायकनृपतिभिः सह तत्प्र[8]स्तावेन कृताभिलावस्य गौरिमुण्डस्य राजधानीं प्रविश्य, तत्सम्बन्धानां विद्याधराधीशानां प्रणतिपूर्णहृदयसौजन्योद्गारं[10] भृशं शसन् अनभीष्टोत्कारं[9] रक्षोत्करपरिग्रहं, पुष्पनिकरकराणां तेषां पूजोपहारं प्रतिपन्नवान्।

ततो निहतसकलसपत्नराज्यावासिक्तसमुत्सवे नानादिग्देशसमागतागणितविद्याधरोद्गीयमानं निजविजययशः सस्तावे[12] छन्दोगकृतसस्तावनिवं[13] श्रृण्वन्तं तं सत्रान धनवती समुपेत्य 'देव, गौरिमुण्डस्य गन्धर्वविद्याकृतापूर्वसस्तवा, त्रैलोक्यसुन्दरी आत्मनिकानाम्नी कन्याऽस्ति तां त्वमुपयच्छस्व। एवमुक्तो राजा तां तत्रानाय्य तदहन्येव तामुपयेमे। प्रातश्च वेगवती प्रभावतीं सम्प्रेष्याषाढपुरान्मदनमञ्चुकामानायदिति तत्रानीता सा निजपरिभावकमानसवेगवधोत्पन्नहर्षनिर्भरमानसा शूरं स्वपतिं विरहान्ते सम्प्राप्यानिर्वचनीयं समदमन्वभवत्। नरवाहनदत्तोऽपि च चिरोत्सुकस्तस्यै सर्वां विद्यां दत्त्वा प्रभावतीं सम्प्रेष्य भगीरथयशसमप्यानाय्य गौरिमुण्डपुरोद्यानगतः सर्वाभिर्भार्याभिः सह कृतपानादिविविधलीलाप्रस्तारं[14] चिरं चिक्रीड।

१ निष्प्रावरणम्। २ 'उपसर्गे रुवः'। ३. 'अभिनिसः स्तनः शब्दसंज्ञायाम्'। ४ 'समि युद्रुदुवः'। ५ 'श्रिणीभुवोऽनुपसर्गे'। ६ 'वौ क्षुश्रुवः'। ७ 'अवोदोर्नियः'। ८ 'प्रे द्रुस्तुस्रुवः'। ९ 'निरभ्योः पूल्वोः'। १०. 'उन्न्योर्ग्रः'। ११ 'कृ धान्ये'। १२ 'यज्ञे समि स्तुवः' इत्यनेनाधिकरणे घञ् यज्ञे इत्यर्थः। १३ सस्तुतिमिव। १४ 'प्रे स्त्रोऽयज्ञे'।

एकदाऽऽस्थानवर्तिन चक्रवर्तिनमुभौ विद्याधरचारौ समागत्य विज्ञप्तवन्तौ यद् देव, आवामितो धनवतीगिरा मन्दरदेवस्य विस्तारमाप्त चष्टा ज्ञातु गतावभूव। तत्र चास्थानगतोऽनुभूयमानविद्याधरैश्वर्योद्ग्राह

मन्दरदेवपराजय

स्छत्रच्छायाभ्यामावाभ्यामेव स युवराजर्गितो यन्नरवाहनदत्तेन विद्याधरश्रीसङ्ग्राह इत्वा गौरिमुण्डाद्योऽखिला परिणायेन शारा इव पर्य्यायेण निहता इत्यस्माभिरुद्वत्वरिनोपेदय एषोऽत्र न्याय। तदाकर्ण्य दिने, नवच्छद्मावितस्ततोऽटन्तौ कृतनिशोपशायौ च सर्वथाऽनुमिततच्चिकीर्षावावामिह देव विज्ञप्तुमागतवन्तौ।

द्विषन्निवंयागतचारमुखादेतदाकर्ण्य कोपाकुलीभूता नरवाहनदत्तसभाऽनिलाहता पद्मिनीव सञ्जाता। चित्राङ्गदस्य बाहू निजवलयनिस्वनै स्वप्रभोर्युद्धादेशमिवामार्गयताम्। क्षुधा श्वसतोऽमितगतेर्वक्षसि समुत्फलन् हार 'वीर, उत्तिष्ठ, उत्तिष्ठ इति वदन्निव प्रतिबभौ। करेण सशब्दक भूमि ताडयन् पिङ्गलगान्धारो वैरिनिकायचूर्णनोपक्रममित्र व्यधित। वायुपथस्य मुखे कोपेनारोपिता चापलतेव विद्विषामन्ताय पदमादधे। सक्रुद्धश्चण्डसिह पाणिना पाणिं सम्मर्दयन्नेवमह शत्रून् निर्मिमन्थिषामीत्यभिदधदिवालक्ष्यत। सागरदत्तस्य बाहुर्व्योम्नि मूर्च्छता हस्तास्फालनचन्यशब्दन रिपुमिवाह्वयत। नरवाहनदत्तस्तु कोपाविष्टोऽपि प्रकृतिस्थ एवानाकुलस्तिष्ठन् अचाञ्चल्येनैव महता महत्त्वलक्षणमि'ति सूचयन् शत्रु नेतु यात्रायै निश्चिन्वान सचिवान्वितो भार्याभि सह विमानमारुह्य गोविन्दकूटत प्रतस्थे। सर्वे गन्धर्वराजविद्याधराधिपा अपि चैन चन्द्र ग्रहा इव परिवार्य सह जग्मुरिति धनवत्या पुर सरन्त्या नरवाहनदत्तो हिमाचलमासाद्य सितपद्मोच्छ्रिततच्छत्र, समुल्लसद्धसचामर सम्राडुपयुक्तमुपायनमिवादाय समुपस्थित महासर एक प्रापद्। तत्र 'चक्रवर्तिन्, भवताऽस्मिन् सरसि स्नातव्यमि ति वायुपथनोक्तस्तत्र स्नातुमवातरत्। तदानीं दिव्या वागुदूय्यमसूचयत्–यदत्र सरसि

---

१ 'प्रथने वावशब्दे'। २ 'उदि ग्रह'। ३ 'समि मुष्टौ'। ४ 'परिन्योर्नीणोर्द्यूताभ्रेषयो' अभ्रेषो यथाप्राप्तकरणम्, तदर्थे घञ्, न्याय। ५ 'परावनुपात्यय इण'। ६ 'व्युपयो शेते पर्य्याय'। ७–८ निवासचिति शरीरोपसमाधानेष्वादेश्च क', एकत्र निवासेऽन्यत्र समूहेऽनेनैव घञ्। वैरिनिकाय इत्यत्र 'सघे चानौत्तराधर्ये' इति वा घञ्।

अचक्रवर्तिनः स्नानं न सिद्ध्यति। अतोऽद्य प्रभृति त्वदीयं चक्रवर्तित्वं सिद्धं सञ्जातम्। तदाकर्ण्य जलाभ्यन्तरे प्रविष्टश्चक्रवर्ती धौताञ्जनारागदृशः, शिथिलितकेशपाशाः, अङ्गसंसक्तार्द्रवाससश्च प्रिया पश्यन्पुरः सहाम्बुधौ पाथसपतिरिव चिक्रीड। तदानीं तस्मात्सरसः समुत्पतन्त्यः पतत्रिपङ्क्तयः, प्रयुङ्क्तानां श्रियां रसना इव प्रतिबभुः। तत्रत्यानि विकसितान्यपि कमलानि च नरवाहनदत्तावरोधवधूवदनाम्भोजलावण्यविजितानि इव जलोर्मिषु निममज्जुः। तत्र कृतस्नानश्च तस्मिन्नहनि तस्यैव सरसस्तटेऽसौ सपरिच्छद उवास। सभार्यासचिवश्च नर्मकथालापैस्तत्रैव स्थितोऽन्येद्युः प्रातर्निमान्स्य सबलस्ततः प्रतस्थे। मार्गे च वायुपथस्य पुरमवाप्य तदनुरोधेन तं वासरं तत्रैव निनाय। अपरेद्युः स तत्पुरीयोद्यानादिविहारार्थं गतो हेमसिक्तिल्सरित्तटोद्यानविहारिणीं सौम्यसंलापमनोरमामपरामिव रमां वायुपथस्वसारं वायुवेगयशोनाम्नीमपश्यत्। सापि चागतं तं वीक्ष्य तदासक्तचित्तेन तेन व्यावस्मायां समाश्रित्य ततोऽन्तर्दधे इति संलक्षितजिह्वः स, हेत्वन्तरपराङ्मुखीं तां मत्वा निजावासमागतवान्। ततो गोमुखवैदग्ध्यवशेन राज्ञः सहस्थेन मरुभूतिनाऽऽगतेऽखिले वृत्तान्ते तन्मन्त्रण्या वायुवेगयशश्चित्तं जिज्ञासुर्गोमुखस्तत्पुरमयासीत्। वायुपथश्चाकस्मात् पुरं द्रष्टुमिवागतं तं प्रीत्या सत्कृत्यैकान्ते नीत्वा जगाद यद्वायुवेगयशानाम कन्या मदीया भगिनी वर्तते। सा च सिद्धैर्भाविनी चक्रवर्तिपत्नी उक्ता। प्राभृतरूपाद्य तामहं चक्रवर्तिने नरवाहनदत्ताय दित्सामि तत्र तव साहाय्यमपेक्षते। वायुपथोक्तिमेतामाकर्ण्य गोमुखोऽब्रवीत्, यद् यद्यप्यस्माकमेष प्रभुररिविजिगीषया प्रस्थितस्तथापि मदुचितं यत्तद्यावच्छक्यं साधयितुमहं प्रयतिष्ये। एवमुक्त्वा तमामन्त्र्य प्रचलितो गोमुखोऽभ्यर्थनां विनैव सिद्धं कार्यं नरवाहनदत्ताय न्यवेदयत्। अन्येद्युश्च तमेवार्थं वायुपथे विज्ञापयति धीमान् गोमुखो राजानमब्रवीत्, 'देव, वायुपथोऽयं तव भक्त इत्येष यद् ब्रवीति तत्त्वया नूनं कर्तव्यम्। एवमुक्तस्तथेति प्रतिपन्नो राजपुत्रो वायुपथेन दत्तामनिच्छन्तीमपि तदनुज्ञां स्वीचकार। तदानीं विवाह्यमाना साऽब्रोचत् 'अकामयमानाऽप्यहं भ्रात्रा मदीयेन, दीये इति मदीयेऽस्मिन् कर्मणि लोकपाला यूयं साक्षिणः' इति। श्रुवन्त्याश्चैवं तस्यास्तद्वचो, वर्तमाने तत्रत्ये वायुपथान्त पुराङ्गनाभारातिरेके, न कोऽप्यन्य शुश्राव। गोमुखश्च किन्तु

१. 'कर्मव्यतिहारे णच् स्त्रियाम्'; 'णचः स्त्रियामञ्'; 'न कर्मव्यतिहारे'।
२. 'अभिविधौ भावे इनुण्'।

तच्छ्रुत्वा तद्वाक्याशय बुभुत्सुरितस्ततोऽभ्रमदित्येकान्तेऽग्निप्रवेश कर्त्तुमुद्यताश्च-तस्रो विद्याधरकुमारिका ददर्श। तेन तथाऽऽचरणस्य कारण पृष्टाश्च ता वायुवेगयश-कृत समयोल्लङ्घनरूपाऽऽमार्वमाह तस्मै तद्धेतुं निजगदु । तदाकर्ण्य गोमुखो राज्ञ समीप गत्वा नरवाहनदत्ताभ्यियस्मरं तन्न्यवेदयत्। तच्चाकर्ण्य विस्मितो राजा ता कुमारिका रक्षितु वायुवेगयशसा प्रार्थित सचे सह तत्र गत्वा पुर प्रज्वालि-तानलाश्चतस्र कुमारिका पश्यन् वायुपथराजाऽनुजया निजगद, देव, एषेका कालकूटपते सुता कालिका नाम, द्वितीया च विद्युत्पुञ्जाख्या विद्युत्पुञ्जा तृतीया चैषा मन्दरस्य सुता मतङ्गिनी, चतुर्थी च पद्मप्रभा नाम्नी महादंष्ट्रसुता, पञ्चमी अहञ्चेति वय पञ्च सिद्धक्षेत्रे तपस्यन्त भवन्त मारमोहिता मिथ समय व्यदध्म यत्पञ्चभिरस्माभिरयमेव प्रिय पतीकरणीय । भिन्नया च न कयाचिदप्याख्माऽस्मै समर्पणीया। कुर्वन्त्याश्च तथैकस्यामन्याभि सखीदुह तामुद्दिश्य वह्नि प्रवेष्टव्य । एतत्समयभीताहं पृथक् परिणय नैच्छमधुनापि न तुभ्यमात्मा समर्प्यते इति लोकपालसाक्षिणि मदीयेऽस्मिन् समय सर्वा एता मम निर्वेर। सखीरपयम्यैताभि सहाह निर्दद्रा[3]वोच्छ्रि[4]यवता भवताऽनुग्रहणीया। इत्थ तयोक्ते मरणनिरता कुमार्य परस्पर समाश्लिष्यन्त्यस्तुतुपु । राजा चापि निरतिशय जहर्ष। तत्पित-रोऽपि च तत्सर्वमवगत्य तत्क्षण तत्रागतास्तस्मै नरवाहनदत्ताय यथाविधि सर्वा-स्ता ददुरित्येव पञ्च गजाप्लावविद्याधरात्मजा समवाप्य वत्सेशसुत पर माहा त्म्यमुपगतवान् ।

एव तत्र ताभि सह चिर वर्तमान नरवाहनदत्त हरिशिख सेनापति रेकदोवाच, 'देव, शास्त्रज्ञोऽपि भवान् कथमधुना समुल्लङ्घितनीतिनियमो विग्र हावसरेऽनर्वग्रहग्रहाय कामाय भोगप्रसरावसर ददाति? क मन्दरदेव जेतु त्वदीयो यात्रोद्योग कचयन्ति दिनानि इहान्त पुरै सह ते विहार? हरिशि खनेत्यमुक्तो महाराजो जगाद, 'हरिशिख युक्तमुक्त भवता किन्तु न मेऽत्र कोऽपि भोगायोद्योग । अय हि भार्याप्राप्तिकरोऽधुनाऽस्मिद सहायक इति

---

१ आक्रोशेऽवन्योर्ग्रह । २ अविवाहिता, नौ वृधान्य' इत्यनेन धान्य एव घञ् विधानादिह 'प्रदद्दरनिश्चिगमश्च' इत्यप्। ३-४ 'उदि श्रयतियौतिपू-द्रुव'। ५ 'विभापाडिरप्लुवो' (गजाप्लावा गगनगामिनी )। ६ 'अव ग्रहो वर्षप्रतिबन्धे'। ७. 'पुसि सज्ञाया घ प्रायेण' इत्यधिकरणे घ ।

मयाऽभिनन्दितः। अत्रैव च प्रप्राड्वन्तो वणिजः स्वकीयक्रयसिद्धये इव विमुक्त-प्रप्राहाश्च मदीयसैनिका अरिपरिभावाय, निजविजयसिद्धये च साधयन्तु। एवमुक्तवन्तं राजानं श्वशुरो मन्दरोऽवदत्, 'देव, दूरदुर्गमभूमिष्ठोऽयं मन्दरदेवोऽसिद्धचक्रवर्त्यङ्गसर्वस्वेन न केनापि जेतुं शक्यते। अयं हि देवमाय-महावीरसुररक्षितद्वारदेशायां त्रिशीर्षाख्यगुहायां सुरक्षितो वर्तते। तत्र च देव, चक्रवर्तिरत्नं चन्दनपादपो वर्तते। तस्य च तरोर्निकटं न शक्नोत्यचक्रवर्ती जनो गन्तुम् इति त्वं तं स्वाभीष्टसिद्धये समाराधय। मन्दरादित्थमाकर्ण्य निराहारो निष्प्रावारो यतव्रतो नरवाहनदत्तो रात्रौ तं चन्दनतरुं गच्छन् सुदारुणेभ्यो विघ्नेभ्यो विव्रास्यमानोऽपि तस्य तरोर्मूलमवाप्य निबद्धोत्तुङ्गवेदिकं महारत्नं तं सोपानैरुपारुह्य ववन्दे। तेन चातिप्रसन्नरसत्तरुः 'चक्रवर्तिन्, अयमहं ते सिद्धश्चन्दनवृक्षः, स्मृतमात्र एव चाहं त्वां सन्निधास्ये। त्वमधुनेतो गोविन्दकूटं व्रज, तत्रान्यान्यपि रत्नानि ते सेत्स्यन्ति येनाचिरमेव ते मन्दरदेवविजयनिर्णयः। रात्रावेवमशरीरिण्या वाचोक्तो नरवाहनदत्तोऽतिहृष्टस्तथेत्युक्त्वा सिद्धिमान्, दिव्यपादपकृतप्रणतिर्निजकटकमायातरतां निशां नीत्वा प्रातरास्थानेऽखिलेभ्यः साधितचन्दनतरुवृत्तान्तमाचख्यौ। ततः सर्वाभिः स्वदयिताभिः सर्वैर्निजसचिवादिभिश्च सह सम्मन्त्र्य मन्दरदेवदर्पं विजेतुकामश्चन्दनतरुप्रतिपादितान्यरत्नसिद्धये दिव्येन विमानेन गोविन्दकूटगिरिं समाससाद।

तत्र चैकदाऽऽस्थानमण्डपगतं चक्रवर्तिनं नरवाहनदत्तं व्योममार्गेणामृतप्रभसंज्ञको विद्याधरो, यश्चाग्निपर्वते शत्रुविसमेनं भयाद् रक्षितवान् आसीत्, समागत्य दत्तनिजपरिचयः सप्रीतिस्वीकृतराजातिथ्यादरातिशयः प्राब्रवीत्, 'देव, दक्षिणदिग्वर्ती मलयाख्यो महागिरिरस्ति। तत्रैकस्मिन्नाश्रमे वामदेवनामा महान् ऋषिरस्ति। स त्वां कस्यचित्कार्यस्य हेतोरेकाकिनमाह्वयति' इति तेनाहमिह प्रेषितः। स्वच्च मदीयः पूर्वार्जितः प्रभुरित्यहमिहायातः। तदेहि, तस्य मुनेरन्तिकं शीघ्रं सिद्धयै साधयावः। तेन विद्याधरेणैवमुक्तस्तत्रैव भार्याः सेनाश्च संस्थाप्य तथेत्यभ्युपगत्य नभोमार्गेण क्षिप्रं मलयाचलमवाप्य वामदेवमभ्युपगतो जरसा पाण्डुरं, प्रांशुशरीरं, नेत्रकुहरस्फुरत्तारकमणिद्युम्नम् विद्याधरेन्द्र-

१. 'प्रे वणिजाम्'। २. 'रस्मौ च'। ३. 'परौ भुवोऽवज्ञाने'। ४. 'एरच्'। ५. 'शृणोतेराच्छादने'। ६. 'प्रद्रुपदर्शनिविगमश्च'। ७. 'भयादीनामुपसंख्यानम्'। ८. 'एरच्'।

रत्नस्थान, समुल्लसज्जगत्तलम्, सिद्धिसाहाय्यहेतो महागन हिमाद्रिमिवावलोक्य तन्मुनिचरणौ ववन्दे। सोऽपि च प्रदर्शितातिथ्यादरो राजानमेवमभाषत, 'पुरा, पुरारातिना कामरूपेण दग्धेऽपि त्व रत्या तोषितेन शम्भुना सर्वविद्याधरेन्द्राणा चक्रवर्ती विनिर्मित । मम चैतस्मिन् गम्भीरान्तर्गुहान्तरे आश्रमे विविधानि रत्नानि सन्ति, मदादिष्टानि तानि साधयित्वा त्व गृहाण । एत्र सिद्धस्य ते मन्दरदेवो जेतव्यो भवेदेतदर्थमेव गिरिशाज्ञया त्वं मयेह समाहूत ।

तेन मुनिनेत्थमुक्तो नरवाहनदत्त प्रहृष्टस्तां गुहां प्रविश्य विनिततत्रत्यविघ्नौघोऽभिधावन्त मत्तगजेन्द्र दृष्ट्वा प्रदत्ततन्मुखमुष्टिप्रहार , दन्तस्थापितपादो लाघवेनैव त मत्तगजेन्द्रमारुरोह । तदानीमेव 'साधु, सिद्ध चक्रवर्तिनस्ते महाहस्तिरत्नमित्यपाऽशरीरिणी वाणी गुहामध्यादुदभूत्' ततोऽहीन्द्राभ खड्गमेकमवलोक्य स तत्खड्गरत्न चक्रवर्तिलक्ष्म्या केशपाशमिवाग्रहीत् । यत 'साधु भो जेत्र खड्गरत्न ते सिद्धमि'त्यशरीरिणी वाग्भूयो गुहाभ्यन्तर समुदभूत् । तत स चन्द्रिकारत्न, तदनन्तरञ्च कामिनीरत्नमेव विश्वसिनीनाम्नी प्रसिद्ध विद्यारत्नञ्च सोऽसाधयत् । इत्थ साधितकार्यकालोपयुक्तमाहात्म्यप्रदरत्न स गुहाया निर्गत्य तस्मै वामदेवर्षये सिद्ध सर्वं प्रशशसति प्रीता मुनिस्त सिद्धमहाचक्रवर्तिरत्न जगाद, 'पुत्र, कैलाशोत्तरपार्श्वस्थित मन्दरदवमनुना त्व विनि योनिन्यन्त्रान श्रिय भुङ्क्ष्व' इति ।

तेन मुनिनेत्थमुक्त सिद्धकार्यो नरवाहनदत्त कृततन्मुनिस्तव[1] , अमृतप्रभेण सह व्योम्ना प्रस्थायाह्नाय गोविन्दकूटस्थ श्वश्र्वा महाप्रभावत्या धनवत्याऽभिरक्षित स्वशिविर प्राप । तत्र गृहीतविष्टरश्च पृच्छद्भ्यो जनेभ्यो वाम देवर्षिदर्शनम्, तदादेशेन गुहाप्रवेशम्, रत्नाना सिद्धिञ्च सर्वं शशसेति वाद्यमान तूर्यो नृत्यद्विद्याधरीकस्तत्र महोत्सवाभिनन्दितो जनोऽजायत ।

परेद्युर्विजयाशसिनि लग्ने द्विजेभ्य प्रदर्शितादर[2] , कृतमङ्गलो ब्रह्मनिर्मित शर्वदत्त विमानमारुह्य मन्दरदेव विजेतु ससैन्यान्त पुरसमन्वितो नरवाहनदत्त सेनापतिहरिशिखरादशानुविधायिभिश्चण्डसिंह पिङ्गलगान्धार वायुपथ विद्युत्पुञ्जादिभिर्निजानुचरै सह रणाय प्रतस्थे इति प्रचलद्विद्याधरसामन्तचैत्रसनाच्छन्नगगने

---

१ ऋद्धोरप । २ 'अभासनयोर्विष्टर' । ३ 'मद्दृष्टनिधिगमश्च' । ४ चशिरण्योस्पसम्यानम्' । ५ द्वितप्रकरणे के कृजादीनामिति वक्तव्यम्' ।

तत्तेजोनिह्नुतप्रभः प्रभाकरो लज्जयेव निममज्ज। ततो देवर्षिगणसुसेवितं दिव्याङ्गनोद्यानं गण्डशैलमतिक्रम्य स्फटिकापाण्डुरत्विषः कैलासभूभृतो मूलमवाप। तत्र च मन्दाकिनीतीरे स्थापितनिजसेनापरिच्छदं तं विद्याधराधिपधीमान् मन्दर उवाच देव, अनेकविघ्नं[1] कैलासप्रस्थं[2] समुल्लङ्घ्याग्रतो गन्तुं न योग्यम्। हरास्पदस्यैतस्य हि लङ्घनेन विद्या नश्यन्तीत्यस्य त्रिशीर्षगुहामुत्तरेण गन्तव्यम्। सा च गुहा देवमायाभिधानेन राज्ञाऽभिरक्ष्यते। स च राजाऽतिदृप्तः इति तमजित्वा पुरो गमनमयोग्यम्। मन्दरेणैवमुदितो धनवत्या चानुमोदितो नरवाहनदत्तस्तं वासरं तत्रैव स्थितः आदौ सामप्रयुक्त्यै कृततल्लक्ष्योपजापाय[3] देवमायाय दूतं प्राहिणोत्। देवमायश्च किन्तु सान्त्वेन तच्छासनमप्रतिपद्यमानो युद्धाय समनह्यत्। अतोऽपरेद्युस्सन्नद्धैस्तैस्तैः स्वकीयराजैः सह स चक्रवर्ती तं देवमायारिध्वंसं समूलमुन्मूलयितुं प्रतिप्रायात्। देवमायोऽपि च तत्स्वं बुद्ध्वा योद्धुं सन्नद्धो वराहवज्रमुष्ट्यादिभूरिभूपतिसमन्वितोऽभ्युज्जगामाभ्यमित्रम् इत्युभयसेनासङ्घातसमाच्छादिताम्बरच्छिन्नभूरिशिर श्रेणिशरकार्पणोपगः सर्वीरगर्जनो घोरो रणघनागमः समजायत। तत्र चण्डसिंहो देवमायस्याग्रयोधं सेनान्यं वराहं जघान। अमायिना नरवाहनदत्तेन मायी देवमायश्च शरैः सम्यग्धोरले मूर्च्छितो बद्धोऽक्रियत। बद्धे च तस्मिन् वज्रमुष्टिमहाबाहुप्रभृतिभिः सह तत्सैन्यमभज्यतेति विमानस्थाः 'साधु! साध्विति स्वानयन्तो देवा विजयिनस्तस्य जयस्वनं चनु'। अथ संयतानीतं तमाश्वासननिर्गदैः सान्त्वयित्वा नरवाहनदत्तः ससेद्धं देवमायमनुगृह्यामुञ्चत्। सोऽपि च तद्बाहुजितो वज्रमुष्ट्यादिभिः सार्द्धं प्रणतस्तस्य शासननियमान् प्रत्यपद्यत।

अथैवं प्रवृत्ते संग्रामनिवृत्तिसूचकवीणाघातनिक्वाणे[11], शान्ते चोभयसैन्याह्वे[12]-ह्वे[13], व्यपगते च तस्मिन्नहोरात्रे, प्रातरास्थानमायातो देवमायोऽधीश्वरेण तेन त्रिशीर्षगुहाम्नायं पृष्टो यथातथ्यमेवमवर्णयत्, 'देव, पुरा विद्याधरवराश्रिते भिन्न-

१.-२. 'घञर्थे कविधानम्'। ३. 'व्यधजपोरनुपसर्गे'; अप्; अत उपसर्गे घञि, उपजाप। ४. 'घञपोश्च' इति अद्रो घस्लादेशः। ५. 'व्यधजपोरनुपसर्गे' इत्यप्। ६.-७. 'स्वनहसोर्वा'; घञ्, पक्षे अप्। ८. 'नौ गदनदपठस्वन'। ९. 'गंधोदौ गणप्रशंसयो'; सवल्मित्यर्थः। १०. 'यमः समुपनिविषु च'। ११. 'क्वणो वीणायाञ्च'। १२. 'आङि युद्धे'। १३. शब्दे; 'भावेऽनुपसर्गस्य' इतिह्वयतेरपूसम्प्रसारणञ्च।

साम्राज्ये कैलासस्य दक्षिणोत्तरे द्वे पार्श्वे अभूताम्। तत्र सयमपूर्वककृततपस्तुष्टेन शम्भुना ऋषभात्यश्चक्रवर्ती भवितुं प्रदिष्ट। स च जातूत्तरं पार्श्वं गच्छन् कैलाशमुदग्द्वयदित्यध्वस्थितहरक्रोधाद् भ्रष्टविधो दिवोऽपतत्।

तत स देवान्नादोऽपि तदानीम् अन्यादो, निर्निनदोऽपि समाकर्णितकाननपतत्रि-श्वापदनिनादो निर्निगदोऽपि श्रुतितिरपर्याकृतसशिष्यमुनिगणनिर्गादोऽस्युग्रेण तपसा पुनर्हरमाराध्य सन्तुष्टात्तस्मादुभयो पार्श्वयोश्चक्रवर्तित्वमयाचदिति पिनाकभृत्तस्योत्तरदक्षिणोभयपार्श्वगमनसौलभ्याय कैलास भित्त्वा महागुहाविवर चक्रे। एव विद्ध कैलाश समुद्विग्न 'भगवन्नेतन्मदीयमुत्तरपार्श्वं मानुषागम्यमिति गुहयाऽनया पार्श्वं तत्तेपा गम्य सञ्जातमिति 'देव, तथा कुरु येन मदीयैषा मर्यादा न भिद्येत'। कैलासेनेत्थ विज्ञप्तो हरो द्विरदन्तिदरविषाहीन्द्र-गुह्यकान् रक्षकान् गुहाया स्थापयामास। दक्षिणे विद्याधरेश्वरम् महामायम्, उत्तरे चापराजिता चण्डिकां कालरात्रिं स्थापयन् कृतगुहारक्षो हरो महारत्नानि समुत्पाद्य तत्र व्यवस्थामादिदेशयदिय द्विपार्श्वी सिद्धरत्नस्य चक्रवर्तिन सदूताना सदाराणा तदनुज्ञाताना राज्ञाञ्च गम्या भविष्यति, नान्येषाम्। अथ इत्थमादिष्टवति समये समये विद्याधरीसार्यमाणवीणाप्रक्वणमाकर्णयैस्तत्रर्षभक साम्राज्य कुर्वन्नपि दर्पमूलकर्पणानिव निजप्राणान् वज्रिणे ददौ। एष च त्रिशीर्षाख्यगुहाया अस्या आगमो या च युस्मादृशैर्विना धनजनमदैरन्यैरगम्या। तस्य चैतद्गुहाद्वाररक्षिणो महामायस्य कुले कालानुक्रमेण जातोऽहं देवमायनामा। मम जन्मनि दिव्या सरस्वती सप्रमदाय सप्रमदाय मदीयजनकाय व्याजहार यद्विद्याधरेषु जातोऽय मृधे रिपुभिर्दुर्जय। यश्चामु जेष्यति नून स चक्रवर्ती भविष्यतीति। तेनास्य स्वामिनाऽमुनाऽनुवर्त्येन प्रभुणा च भाव्यम् सोऽहं त्वया जितोऽतो भवान् कैलाशोभयपार्श्वैकचक्रवर्ती प्रभाववानस्माक प्रभुरिति त्रिशीर्षगुहामेतां तीर्त्वा निजवल्वशीकृत शेषाहितसमाजमत्र स्वसमजमुदजेनेव समजतु।

---

१. 'यम समुप०'। २ नितराम् अदनम् न्याद 'नौ ण च' तद्रहितो निरशन इति भाव। ३ 'नौ गदनद०' नि शब्द इत्यर्थ। ४. 'नौ गदनद०' निगादो, वचनम्। ५ 'क्वणो वीणायाम्'। ६. 'नित्यं पण परिमाणे'। ७. 'मदोऽनुपसर्गे'। ८. सपत्नीकाय। ९ 'प्रमदसम्मदौ हर्षे'। १०. 'समुदोरज पशुषु' (समज पशूनां सङ्घ, उदज पशूनां प्रेरणम्)। ११. अज गतिक्षेपणयो इत्यस्माद्धोट्।

देवमायेनेत्युक्तश्चक्रवर्ती जगाद यद्वयमद्य गुहाद्वारमासाद्य तत्र वसाम प्रात कृतसन्निधयश्च तां गुहां प्रवेष्टास्म ' इति । एवमुक्त्वा नरवाहनदत्तोऽन्यो न्योपह्वैराह्वसम्मिलितैः सर्वै रानभि सह तत्र गत्वा गुहाद्वारमावसन् निरालोका न्तर्भागां पुञ्जीभूतकल्पान्तघनतामिस्रामिव स्थितामनर्केन्दुरश्मिप्रवेशां तां गुहा- मालुलोके । द्वितीयेऽह्नि कृततत्सपर्यो ध्यातोपनतसद्रत्नसहाय , सपरिच्छद स चन्द्रिकारत्नैस्तत्रत्यतमासि, चन्दनेन चाद्रिद्विरदान् , हरितरत्नेन दिग्गजान् खड्गरत्नेन च गुह्यकान् , अन्यै रत्नैरन्यान् विघ्नांश्च निवार्य सेनया सहामुमुत्ती- र्णवान् । ततश्चोदग्द्वारेण विनिर्गच्छति तस्मिन् , 'चक्रवर्तिन् , रत्नप्रभावात्समा- हात्म्येन त्वया गुहेय तीर्णेति' दिवो वागुदभूत् । अथ धनवती देवमायश्च त प्रभुमूचतुर्यदेतद्गुहाद्वारे सर्वदा कालरात्रि सन्निधत्ते, सा चामृत निर्हीपूर्णा दानवेन्द्राणां बधकारिणी विष्णुनाऽमृतमन्थने पूर्वमुत्पादिता । सैषा गुहामेतां रक्षितु शर्वेण समादिष्टा येन यथोक्तैस्त्वादृशैर्विनाऽन्यो न कश्चित्तरेत् इति । चक्रवर्ती सिद्धरत्नस्त्वञ्च गुहामिमां तीर्णवान् इत्येषा विजयसिद्धये त्वयाऽवश्यम- र्चनीया । एव धनवती देवमायोक्तस्य तस्य नरवाहनदत्तस्य वासरस्तत्राक्षैपीत् । कैलासोत्तरसानवश्च समासन्नमग्रामरधिरोचिता इव सन्ध्यारुणा अराजन्त । रात्रस्तस्य सर्वं बल समुपलब्धवलस्तमोघैनो गुहागृहरूप सद्यो वैरमिव स्मरैरा- दानीमावृणोत् । आयसाङ्केनघनोरस्कभूतादिगण कालरात्रिक्रोधाङ्कुर इवाविर्- भूयेति क्षणेनैव नरवाहनदत्तमतिरिच्य सर्वं तत्सैन्य शीतलीभूतापर्धन नि मज्ञ सजज्ञे। तदवलोक्यानर्चादुर्मनायमानकालरात्रिविजृम्भित तत्स्वचर्मवगत्य नरवाहन दत्तस्तद्गुहाद्वारोपप्रघणस्थतत्रत्यभूम्युद्वर्त्य निघं-तरपलाभ्रंमनुप्रिम पक्षिम्रमघ- लपुष्पैस्तामर्चयन्निथ तुष्टाव, 'देवि, त्व हि प्राणिनां प्राणदात्रि , तेषां सञ्जीवनी चेति त्रिभुवन त्वमेवाश्वासयसि । दुष्टदुरितद्रुमस्तम्बेरन्दुघर्षे-परिघे पापिदुर्गा त्वमेवेति जगदुत्पत्ति स्थिति नाशहेतवे तुभ्य नम । त्रिनिजस्य सुतापि यदा

---

१ 'ह सम्प्रसारणञ्च न्यभ्युपविषु' । २ 'आङि युद्धे' । ३ 'हनश्च वध ।' ४ 'मूर्तौ घन' । ५ 'उद्धनोऽत्याधानम्' । ६ 'अपघनोऽङ्गम्' । ७ 'प्रघा- णैकदेशे प्रघण प्रघाणश्च' । ८ 'उपघ्न आश्रये' । ९ निघो निमितम्' (समा- रोहपरिणाहवन्त इत्यर्थ ) । १० 'डि्वत क्त्रि' 'क्त्रेर्मम्नित्यम्' । ११ 'स्तम्ब क च' १२ 'करणेऽयोविद्रुषु' । १३ 'परौ घ' ।

कालरात्रि सा न तुतोष तदा स्वमूर्द्धापहारेण स तामार्चिचिषद् इति स्वशिरश्छेत्तु समुपात्तात्महामोदृष[1] तुष्टा देवी तत्क्षणमवोचत्, 'पुत्र, साहस मा कार्षी । एषाऽह ते सिद्धा अचिरेणैव तवैतद्धृल प्रकृतिस्थ भवतु । विनयश्च त्वमाशु प्राप्नुया । एव तस्यामभिदध यामेव सर्वे तन्नरवाहनदत्तबल पर्य्यङ्कसुसप्रबुद्ध मिव सञ्ज्ञानमिति सर्वास्तद्भार्या, वयस्या, अन्ये विद्याधराश्चावासस्समानन्दयंश्च-क्रवर्तिनस्तस्या मीयजनरक्षणे रत्नविशिष्ट त प्रभाव मुहुर्मुहु प्राशसन् । वीरो नरवाहनदत्तश्च तदाना विहिताहारपानाद्यावश्यकक्रियोऽनुभूततद्रात्रिप्रियस्वप्न, कालरात्रि प्रातर्विविनीऽनाधिरभ्यर्च्य पयोधिगाम्भीर्यनिधिर्विरुद्धविद्याधरानिरुद्धा ध्यान धूमशिख प्रतिप्रायात् इति मन्दरदेवीयप्रधानेन तेन सह चक्रवर्तिनस्तस्य तादृश जन्यमजनि यत् सर्वतो व्योम, खड्गमयमिव, मही च शूरमूर्धमयीव, आहवश्च 'जहि जहीति जहि, मा जहिहि, जहीहि, जहाहि इत्युग्रवीरवाक्यमय इवाभवत् । आमायकाल प्रवर्तमाने एव सेनयोरुभयोर्युद्धे चक्रवर्ती, धूमशिख युद्धे बद्ध्वा शान्तधूमशिखोद्रेकमग्निदग्धेन्धनमिव कृत्वा निजशासन ग्राहयामास ।

द्वितीयऽह्नि चाग्रतो योद्धुमायान्त मन्दरदेव चारेभ्यो ज्ञात्वा किञ्चिद्दूर गतोऽग्रे बहुराक्षसैन्य उच्चिर्ति, रचितव्यूहमग्रत समागत तमवलोक्य स्वपत्नीरानन्यकन्नारितप्रतिव्यूहरचनो नरवाहनदत्तोऽरेर्बलमभ्यधावत् इति प्रलय कालोद्वेलनलधिक्षुभितजलौघानुकारिणोरुभयो सेनयोराहवो भयावहोऽवर्तत । एकतश्चण्डसिंहाद्या महारथा, अन्यतश्च काञ्चनदंष्ट्रादयप्रभृतयश्शूरा युध्यन्ते स्मेतिविक्षोभितकुलाचलमाभूय्यकम्पितत्रैलोक्योऽवलोक्यो विजृम्भे सग्राम ।

तत्र सर्वविद्याधरसैनिकानाम् अधेश्वर्याय युध्यमानस्य नरवाहनदत्तस्य प्रथमत स्थित्वा प्रतियुध्यमानस्य मन्दरदेवस्य च, परस्पर मोहङ्कारम् आक्रोशताम् 'अलमेवकार'[5] पलायितेनेति न्यक्कारपूर्वकम् अरिवेद[11] प्रहरताम्, यवेद्वेद माहतानाञ्च सैनिकाना निर्भरभरितसकलत्रिभुवनोदरो महानुदभूद्रणारव[13] । त च

---

१ 'सघोद्धौ गणप्रशसयो'। २ 'परेश्च घाड्ङयो'। ३ 'द्वितोऽधुच्'। ४ 'यन्याचयतविच्छप्रच्छरभोनङ्'। ५ 'स्वगो नन्'। ६ 'उदसर्गे घो वि' ७ 'कर्मण्यधिकरणे च'। ८ 'विभाषाऽग्रे प्रयमपूर्वेषु'। ९ 'कर्तव्याकोशे कृन खमुन्'। १० 'अन्यथैवकथमित्यसु सिद्धाप्रयोगश्चेत्'। ११ 'कर्मणि दशिविदो साकल्ये'। १२ 'यावति विन्दजीवो'। १३ 'विभाषाङि रुप्लुवो'।

